1328

# श्री नरसिंहपुराणम् ।

## प्रथमोऽध्यायः ।

श्री लक्ष्मीनृसिंहाय नमः ॥ ॥ श्री वेदव्यासाय नमः ॥
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं चैव ततो जयमुदीरयेत् । तप्तहाटककेशान्तर्ज्वलत्पावकलोचन । वज्राधिकनखस्पर्श दिव्यसिंह नमोऽस्तु ते १ पान्तु वो नरसिंहस्य नखलांगलकोटयः । हिरण्यकशिपोर्वक्षःक्षेत्रासृक्कर्दमारुणाः २ हिमवद्वासिनः सर्वे मुनयो वेदपारगाः । त्रिकालज्ञा [illegible]त्मानो नैमिषारण्यवासिनः ३ येऽर्बुदारण्यनिरताः पुष्करारण्यवासिनः । महेन्द्राद्रिरता ये च ये च विन्ध्यनिवासिनः ४ धर्मारण्यरता ये च दण्डकारण्यवासिनः । श्रीशैलनिरता ये च कुरुक्षेत्रनिवासिनः ५ कौमारपर्वते ये च ये च पम्पानिवासिनः । एते चान्ये च बहवः सशिष्या मुनयोऽमलाः ६ माघमासे प्रयागं तु स्नातुं तीर्थं समागताः । तत्र स्नात्वा यथान्यायं कृत्वा कर्म जपादिकम् ७ नत्वा तु माधवं देवं कृत्वा च पितृतर्पणम् । दृष्ट्वा तत्र भरद्वाजं पुण्यतीर्थनिवासिनम् ८ पूजयित्वा विधिवत्तेनैव च सुपूजिताः । आसनेषु विचित्रेषु बृस्यादिषु यथाक्रमम् ९ भरद्वाजेन दत्तेषु आसीनास्ते तपोधनाः । कृष्णाश्रिताः कथाः सर्वे परस्परमथाब्रुवन् १० कथान्तेषु ततस्तेषां मुनीनां भावितात्मनाम् । आजगाम महातेजा[illegible]त्र सूतो महामतिः ११ व्यासशिष्यः पुराणज्ञो लोमहर्षणसंज्ञकः । तान् प्रणम्य यथान्यायं स च तैश्चाभिपूजितः १२

---

१ 'हिमवद्वासिनः' इति 'क' पुस्तकपाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

उपविष्टो यथायोग्यं भरद्वाजमतेन सः । व्यासशिष्यं सुखासीनं ततस्ते लोमहर्षणम् १३ तं पप्रच्छ भरद्वाजो मुनीनामग्रतस्तदा ।

भरद्वाज उवाच ॥

शौनकस्य महासत्रे वाराहाख्या तु संहिता । त्वत्तः श्रुता पुरा सूत एतैरस्माभिरेव च १४ साम्प्रतं नारसिंहाख्यां त्वत्तः पौराणसंहिताम् । श्रोतुमिच्छाम्यहं सूत श्रोतुकामा इमे स्थिताः १५ अतस्त्वां परिपृच्छामि प्रश्नमेतं महामुने । ऋषीणामग्रतः सूत मातर्येषां महात्मनाम् १६ कुत एतत्समुत्पन्नं केन वा परिपाल्यते । कस्मिन् वा लयमभ्येति जगदेतच्चराचरम् १७ किंप्रमाणं च वै भूमेर्नृसिंहः केन तुष्यति । कर्मणा तु महाभाग तन्मे ब्रूहि महामते १८ कथं च सृष्टेरादिः स्यादवसानं कथं भवेत् । कथं युगस्य गणना किं वा स्यात्तु चतुर्युगम् १९ को वा विषस्तेष्वत्र का वाऽवस्था कलौ युगे । कथमाराध्यते देवो नरसिंहोऽप्यमानुषैः २० क्षेत्राणि कानि पुण्यानि के च पुण्याः शिलोच्चयाः । नद्यश्च काः पराः पुण्या नृणां पापहराः शुभाः २१ देवादीनां कथं सृष्टिः मनोर्मन्वन्तरस्य तु । तथा विद्याधरादीनां सृष्टिरादौ कथं भवेत् २२ यज्वानः के च राजानः के च सिद्धिं परां गताः । एतत्सर्वं महाभाग कथयस्व यथाक्रमम् २३

सूत उवाच ॥

व्यासप्रसादाज्जानामि पुराणानि तपोधनाः । तं प्रणम्य प्रवक्ष्यामि पुराणं नारसिंहकम् २४ पाराशर्यं परमपुरुषं विश्वदेवैकयोनिं विद्यावन्तं विपुलमतिदं वेदवेदांगवेद्यम् । शश्वच्छान्तं शमितविषयं शुद्धतेजोविशालं वेदव्यासं विगतशमलं सर्वदाहं नमामि २५ नमो भगवते तस्मै व्यासायाऽमिततेजसे । यस्य प्रसादाद्वक्ष्यामि वासुदेवकथामिमाम् २६ सुनिर्णीतो महान्प्रश्नस्त्वया यः परिकीर्तितः । विष्णुप्रसादेन विना वक्तुं केनापिशक्यते

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

२७ तथापि नरसिंहस्य प्रसादादेव तेऽधुना । प्रवक्ष्यामि महा-
पुण्यं भारद्वाज शृणुष्व मे २८ शृण्वन्तु मुनयः सर्वे सशिष्या-
स्त्वत्र ये स्थिताः । पुराणं नरसिंहस्य प्रवक्ष्यामि यथातथा २९
नारायणादिदं सर्वं समुत्पन्नं चराचरम् । तेनैव पाल्यते सर्वं
नरसिंहादिमूर्तिभिः ३० तथैव लीयते चान्ते हरौ ज्योतिःस्वरू-
पिणि । यथैव देवः सृजति तथा वक्ष्यामि तच्छृणु ३१ पुरा-
णानां हि सर्वेषां नायं साधारणः स्मृतः । श्लोकोयं त्वं मुनेः
श्रुत्वा निःशेषं ते मुने शृणु ३२ सर्गश्च प्रतिसर्गश्च वंशो मन्व-
न्तराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ३३ आदि-
सर्गोऽनुसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चैव वक्ष्या-
म्यनुसमासतः ३४ आदिसर्गो महांस्तावत् कथयिष्यामि वै
द्विजाः । यस्मादारभ्य देवानां राज्ञां चरितमेव च ३५ ज्ञायते
सरहस्यं च परमात्मा सनातनः । प्राक्सृष्टेः प्रलयादूर्ध्वं नासी-
त्किंचिद्द्विजोत्तम ३६ ब्रह्मसंज्ञमभूदेकं ज्योतिष्मत्सर्वकारणम् ।
नित्यं निरंजनं शान्तं निर्गुणं नित्यनिर्मलम् ३७ आनन्दसागरं
स्वच्छं यं काङ्क्षन्ति मुमुक्षवः । सर्वज्ञं ज्ञानरूपत्वादनन्तमजम-
व्ययम् ३८ '[1]अविनाशि सदास्वच्छमच्युतं पावकं महत्' ।
सर्गकाले तु संप्राप्ते ज्ञात्वा तु ज्ञातृनायकः । अन्तर्लीनविकारं
च तत्स्रष्टुमुपचक्रमे ३९ तस्मात्प्रधानमुद्भूतं ततश्चापि महानभूत् ।
सात्त्विको राजसश्चैव तामसश्च त्रिधा महान् ४० वैकारिकस्तै-
जसश्च भूतादिश्चैव तामसः । त्रिविधोऽयमहंकारो महत्तत्त्वादजा-
यत ४२ यथा प्रधानेन महान् महता स तथावृतः । '[2]भूता-
दिषु विकुर्वाणः शब्दतन्मात्रकं ततः ४३ ससर्ज शब्दतन्मात्रा-
दाकाशं शब्दलक्षणम् । ' [3]शब्दमात्रं तथाकाशं भूतादींश्च

---

१ इदमर्धं 'ख' पुस्तके न विद्यते । २ भूतादिष्विति श्लोकः 'क' चिह्निते एव विद्यते । ३ शब्दमात्रं तथाकाशमित्यत्र 'तथायमप्यहंकार' इति 'ख' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

समावृणोत् ४४ बलवानभवद्वायुस्तस्य स्पर्शगुणो मतः । आकाशं शब्दतन्मात्रं स्पर्शमात्रं तथावृणोत् ४५ ततो वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह । ज्योतीरूपोद्यतो वायोस्तद्रूपगुणमुच्यते ४६ स्पर्शमात्रात्तु वै वायू रूपमात्रं समावृणोत् । संभवन्ति ततोऽम्भांसिरसाधाराणि तानि तु ४७ रसमात्राणि चाम्भांसि रूपमात्रं समावृणोत् । विकुर्वाणानि चाम्भांसि गन्धमात्रं ससर्जिरे ४८ तस्माज्जाता मही चेयं सर्वभूतगुणाधिका । संघातो जायते तस्मात्तस्य गन्धगुणो मतः ४९ तस्मिंस्तस्मिंस्तु तन्मात्रा तेन तन्मात्रका स्मृता । तन्मात्राण्यविशेषाणि विशेषाः क्रमशोऽपराः ५० भूततन्मात्रसर्गोयमहंकारात्तु तामसात् । कीर्तितस्ते समासेन भरद्वाज मया तव ५१ तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश । एकादशं मनश्चात्र कीर्तितं तत्र चिन्तकैः ५२ बुद्धीन्द्रियाणि पञ्चात्र पञ्च कर्मेन्द्रियाणि च । तानि वक्ष्यामि तेषां च कर्माणि कुलपावन ५३ श्रवणे च दृशौ जिह्वा नासिका चैव पञ्चमी । शब्दादिज्ञानसिद्ध्यर्थं बुद्धियुक्तानि पञ्च वै ५४ पायूपस्थे हस्तपादौ वाग्भरद्वाज पञ्चमी । विसर्गानन्दशिल्पी च गत्युक्ती कर्म तत्स्मृतम् ५५ आकाशवायुतेजांसि सलिलं पृथिवी तथा । शब्दादिभिर्गुणैर्विप्र संयुक्तान्युत्तरोत्तरैः ५६ नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन्प्रजां स्रष्टुं समागम्य सकृत्स्नशः ५७ समेत्यान्योन्यसंयोगं परस्परसमाश्रयात् । एकसंघातलक्षाश्च संप्राप्यैक्यमशेषतः ५८ पुरुषाधिष्ठि

---

१ ‘ गुणः स्मृत ’ इति ‘ ख ’ चिन्हिते पाठः । २ ‘ तन्मात्रार्थे विशेषाणी ’ ति ‘ ख ’ तन्मात्राण्यवशेषाणी ’ ति ‘ ग ’ पुस्तके पाठः । ३ ‘ धर्माणीति ‘ क ख ’ पुस्तके । ४ ‘ विसर्गानन्द शिल्पं चे ’ ति ‘ ग ’ पुस्तके पाठः । ५ ‘प्रजाः स्रष्टु ’ मिति ‘ ग ’ पुस्तके । ६ ‘ पुरुषोधि समामाद्य ’ इति ‘ क ख ’ पुस्तकयाः । ७ ‘ परात्म्यैक्य ’ मिति ‘ ख पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तत्त्वाच्च प्रकृत्यानुग्रहेण च । महदादयो विशेषान्तास्त्वण्डमुत्पादयन्ति ते ५९ तत्क्रमेण विवृद्धं तु जलबुद्बुदवत्स्थितम् । भूतेभ्योऽण्डं महाबुद्धे बृहत्तदुदकेशयम् ६० प्राकृतं ब्रह्मरूपस्य विष्णोः स्थानमनुत्तमम् । तत्राव्यक्तस्वरूपोसौ विष्णुर्विश्वेश्वरः प्रभुः ६१ ब्रह्मस्वरूपमास्थाय स्वयमेव व्यवस्थितः । गर्भोदकं समुद्राश्च तस्याभूवन्महात्मनः ६२ अद्रिद्वीपसमुद्राश्च सज्योतिर्लोकसंग्रहः । तस्मिन्नण्डेऽभवत्सर्वं सदेवासुरमानुषम् ६३ रजोगुणयुतो देवः स्वयमेव हरिः परः । ब्रह्मरूपं समास्थाय जगत्सृष्टौ प्रवर्तते ६४ सृष्टं च पात्यनुयुगं यावत्कल्पविकल्पना । नरसिंहादिरूपेण रुद्ररूपेण संहरेत् ६५ ब्राह्मेण रूपेण सृजत्यनन्तो जगत्समस्तं परिपातुमिच्छन् । रामादिरूपं स तु गृह्य पाति भूत्वाथ रुद्रः प्रकरोति नाशम् ६६ ॥ इति श्रीनरसिंहपुराणे सर्ग कथने प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ।

### सूत उवाच ॥

ब्रह्मा भूत्वा जगत्सृष्टौ नरसिंहः प्रवर्त्तते । यथा ते कथयिष्यामि भरद्वाज निबोध मे १ नारायणाख्यो भगवान् ब्रह्मा लोकपितामहः । उत्पन्नः प्रोच्यते विद्वन् नित्योऽसावुपचारतः २ निजेन तस्य मानेन आयुर्वर्षशतं स्मृतम् । कालश्च विप्रजस्तेन तस्यायुः परिणम्यते ३ अन्येषां चैव भूतानां चराणामचराश्च ये । भूभूभृत्सागरादीनामशेषाणां च सत्तम ४ संख्याज्ञानं च ते

---

'प्रक्रमानु'-इति 'ख' पुस्तके । २ 'तत्राव्यक्तसुरूपे' ति 'क ख' पुस्तकयोः । ३ 'बद्धस्वरूपमास्थ ये' ति पु० पा० । ४ 'सृष्टं च कल्पानुयुग' मिति 'ख' पुस्तके पाठः । ५ 'कालश्च विच्युतस्तेने' ति 'ग' पुस्तके 'कालस्य विप्लुतस्तेने' ति 'क' पुस्तके पाठौ । ६ 'परिपच्यत' इति 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वच्मि मनुष्याणां निबोध मे । अष्टादश निमेषास्तु काष्ठिका परिकीर्तिता ५ काष्ठास्त्रिंशत्कला ज्ञेया कलास्त्रिंशन्मुहूर्तकम् । त्रिंशत्संख्यैरहोरात्रं मुहूर्तैर्मानुषं स्मृतम् । अहोरात्राणि तावंति मास पक्षद्वयात्मकः ७ तैः षड्भिरयनं मासैर्द्वेऽयने दक्षिणोत्तरे । अयनं दक्षिणं रात्रिर्देवानामुत्तरं दिनम् ८ अयनद्वितयं वर्ष मर्त्यानामिह कीर्तितम् । नृणां मासः पितॄणां तु अहोरात्रमुदाहृतम् ९ वस्वादीनामहोरात्रं मानुषो वत्सरः स्मृतः । दिव्यैर्वर्षसहस्रैस्तु युगं त्रेतादिसंज्ञितम् १० चतुर्युगं द्वादशभिस्तद्विभागं निबोध मे । चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् ११ दिव्याब्दानां सहस्राणि युगेष्वाहुः पुराविदः । तत्प्रमाणैः शतैः संख्या पूर्वा तत्र विधीयते १२ संध्यांशकश्च तत्तुल्यो युगः स्यात्तत्र भो द्विज । सन्ध्यासन्ध्यांशयोर्मध्ये यःकालो वर्ततेद्विज १३ युगाख्यः स तु विज्ञेयः कृतत्रेतादिसंज्ञकः । कृतं त्रेता द्वापरश्च कलिश्चेति चतुर्युगम् १४ प्रोच्यते तत्सहस्रं तु ब्रह्मणो दिवसं द्विज । ब्रह्मणो दिवसे ब्रह्मन् मनवस्तु चतुर्दश १५ भवन्ति परिमाणं च तेषां कालकृतं शृणु । सप्तर्षयस्तु शक्रोथ मनुस्तत्सूनवोपि ये १६ एककालं हि सृज्यन्ते संह्रियन्ते च पूर्ववत् । चतुर्युगानां संख्या च साधिका ह्येकसप्ततिः १७ मन्वन्तरं मनोः कालः शक्रादीनामपि द्विज । अष्टौ शतसहस्राणि दिव्यया संख्यया स्मृतः १८ द्विपञ्चाशत्तथान्यानि सप्त चान्यानि वै मुने । विंशतिश्च सहस्राणि कालोयं साधिकः स्मृतः १९ ब्राह्ममेकमहर्ज्ञेयमेतद्देवानुकीर्तितम् । विश्वस्यादौ सुमनसा सृष्ट्वा देवांस्तथा पितॄन् २० गन्धर्वान् राक्षसान् यक्षान् पिशाचान् गुह्यकांस्तथा । ऋषीन्विद्याधरांश्चैव मनुष्यांश्च पशूंस्तथा २१

---

१ 'युगस्यानन्तरो हि स' इति 'ग' पुस्तके । २ 'समनुकीर्तितम्' मिति 'ख' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पक्षिणः स्थावरांश्चैव पिपीलिकभुजंगमान् । चातुर्वर्ण्यं तथा सृष्ट्वा नियुज्याधरकर्मणि २२ पुनर्दिनान्ते त्रैलोक्यमुपसंहृत्य[1] स प्रभुः । शेते चानन्तशयने तावन्तीं रात्रिमव्ययः २३ तस्यान्तेऽभून्महान्कल्पो ब्राह्म[2] इत्यभिविश्रुतः । यस्मिन्मत्स्यावतारोऽभून्मथनं च महोदधेः २४ तद्वद्वराहकल्पश्च[3] तृतीयः परिकल्पितः । यत्र विष्णुः स्वयं प्रीत्या वाराहं वपुराश्रितः २५ उद्धर्तुं वसुधां देवीं स्तूयमानो महर्षिभिः । सृष्ट्वा[4] जगद्व्योमचराप्रमेयः प्रजाश्च सृष्ट्वा सकलास्तथेशः । नैमित्तिकाख्ये प्रलये समस्तं संहृत्य[5] शेते हरिरादिदेवः २६ ॥ इतिश्रीनरसिंहपुराणे सर्गरचनायां द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोध्यायः ।

### सूत उवाच ।

तत्र सुप्तस्य देवस्य नाभौ पद्ममभून्महत् । तस्मिन् पद्मे महाभाग वेदवेदाङ्गपारगः १ ब्रह्मोत्पन्नः स तेनोक्तः प्रजां सृज महामते । एवमुक्त्वा निराभावं गतो नारायणः प्रभुः २ तथेत्युक्त्वा स तं देवं विष्णुं ब्रह्माथ चिन्तयत् । आस्ते किंचिज्जगद्बीजं नाध्यगच्छत किंच न ३ तावत्तस्य महान् रोषो ब्रह्मणोभून्महात्मनः । ततो बालः समुत्पन्नस्तस्याङ्के रोषसंभवः ४ स रुदन्वारितस्तेन ब्रह्मणा व्यक्तमूर्तिना । नाम मे देहि चेत्युक्तस्तस्य रुद्रेत्यसौ ददौ ५ तेनासौ विसृजस्वेति प्रोक्तो लोकमिमं पुनः । अशक्तस्तत्र सलिले ममज्ज तपसेऽऽदृतः ६ तस्मिन् सलिलमग्ने तु पुनरन्यं प्रजापतिः । ब्रह्मा ससर्ज भूतेशो दक्षि-

---

१ त्रैलोक्यमिमं संहृत्येति ‘ ग ’ पुस्तके पाठः । २ ‘ प्राप्तं इत्यपि विश्रुत ’ ‘ क ख ’ पुस्तकयोः पाठः । ३ ‘ सोयं वराहकल्पश्चे ’ ति ‘ ग ’ पुस्तके पाठः । ४ ‘ सृष्ट्वा जगद्व्योमधरान्नमेवं प्रजाश्च सृष्ट्वा सकलास्तथैव ’ इति ‘ ग ’ के । ५ ‘ समग्रं ग्रस्त्वा च ’ इति ‘ ग ’ पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

णाङ्गुष्ठतो परम् ७ दक्षं वामे ततो ऽङ्गुष्ठे तस्य पत्नी व्यजायत स तस्यां जनयामास मनुं स्वायंभुवं प्रभुः ८ तस्मात्संभाविता सृष्टिः प्रजानां ब्रह्मणा तदा । इत्येवं कथिता सृष्टिर्मया ते मुनि-सत्तम । सृजतो जगतीं तस्य किं भूयः श्रोतुमिच्छसि ९

भरद्वाज उवाच ॥

संक्षेपेण तदाख्यातं त्वया मे लोमहर्षण ।
विस्तरेण पुनर्ब्रूहि आदिसर्गं महामते ॥ १० ॥

सूत उवाच ॥

तथैव कल्पावसाने निशासुप्तोत्थितः प्रभुः । सत्त्वोद्रिक्तस्तदा ब्रह्मा शून्यं लोकमवैक्षत ११ नारायणः परोऽचिन्त्यः पूर्वेषामपि पूर्वजः । ब्रह्मस्वरूपी भगवाननादिः सर्वसंभवः १२ इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति । ब्रह्मस्वरूपिणं देवं जगतः प्रभवात्मकम् १३ आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः १४ सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथा पुरा । अबुद्धिपूर्वकं तस्य प्रादुर्भूतं तमस्तदा १५ तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञिकः । अविद्या पंचपर्वैषा प्रादुर्भूता महात्मनः १६ पंचधा वेष्टितः सर्गो ध्यायतः प्रतिबोधवान् । मुख्यसर्गः स विज्ञेयः सर्गसिद्धिविचक्षणैः १७ यत्पुनर्ध्यायतस्तस्य ब्रह्मणः समपद्यत । तिर्यक्स्रोतस्ततस्तस्मात् तिर्यग्योनिस्ततः स्मृतः १८ पश्वादयस्ते विख्याता उत्पथग्राहिणश्च ये । तमप्यसाधकं मत्वा तिर्यग्योन्यं चतुर्मुखः १९ ऊर्ध्वस्रोतस्तृतीयस्तु सात्त्विकः समवर्तत । तदा तुष्टोऽन्यसर्गं च चिन्तयामास वै प्रभुः २० ततश्चिन्तयतस्तस्य सर्गवृद्धिं प्रजा

---

१ 'दक्षं वामात्ततोऽङ्गुष्ठात्तस्य पत्नीमजीजनत्' इति 'ग' पुस्तके पाठः ।
२ पञ्चधाधिष्ठित इति 'ग' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पतेः । अर्वाक्स्रोतःसमुत्पन्ना मनुष्याः साधका मताः २१ नवप्रकारा बहुलास्तमोयुक्ता रजोधिकाः । तस्मात्ते दुःखबहुला भूयो भूयश्च कारिणः २२ एतत्ते कथिताः सर्गा बहवो मुनिसत्तम । प्रथमं महतः सर्गस्तन्मात्राणां द्वितीयकः २३ वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः । मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः २४ तिर्यक्स्रोतश्च यः प्रोक्तस्तिर्यग्योनिः स उच्यते । ततोर्ध्वस्रोतसः षष्ठो देवसर्गस्तु सस्मृतः २५ ततोऽर्वाक्स्रोतसः सर्गः सप्तमो मानुषः स्मृतः । अष्टमोऽनुग्रहः सर्गः सात्विको य उदाहृतः २६ नवमो रुद्रसर्गस्तु नव सर्गाः प्रजापतेः । पञ्चैते वैकृताः सर्गाः प्राकृतास्ते त्रयः स्मृताः २७ प्राकृता वैकृताश्चैव जगतो मूलहेतवः । सृजतो ब्रह्मणः सृष्टिमुत्पन्ना ये मयेरिताः । तं तं विकारं च परं परेशो मायामधिष्ठायं सृजत्यनन्तः । अव्यक्त रूपी परमात्मसंज्ञः संप्रेर्यमाणो निखिलात्मविद्यः २८ ॥
इति श्रीनरसिंहपुराणे सृष्टिरचनाप्रकारो नाम तृतीयोऽध्यायः ३

## चतुर्थोऽध्यायः ।

भरद्वाज उवाच ॥

नवधा सृष्टिरुत्पन्ना ब्रह्मणोऽव्यक्तजन्मनः ।
कथं सा ववृधे सूत एतत्कथय मेऽधुना ॥ १ ॥

सूत उवाच ॥

प्रथमं ब्रह्मणा सृष्टा मरीच्यादय एव च । मरीचिरत्रिश्च तथा अंगिराः पुलहः क्रतुः २ पुलस्त्यश्च महातेजाः प्रचेता भृगुरेव च । नारदो दशमश्चैव वसिष्ठश्च महामतिः ३ सनकादयो निवृत्ताख्ये ते च धर्मे नियोजिताः । प्रवृत्ताख्ये मरीच्याद्या मुक्त्वैकं नारदं मुनिम् ४ योसौ प्रजापतिस्त्वन्यो दक्षनामाङ्गसम्भवः । तस्य दौहित्रवंशेन जगदेतच्चराचरम् ५ देवाश्च दानवाश्चैव गन्धर्वोर-

१ 'वसिष्ठश्चे' ति 'ग' पुस्तके । २ 'विख्यातास्ते' इति ग पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

गपक्षिणः। सर्वे दक्षस्य कन्यासु जाताः परमधार्मिकाः ६ चतुर्विधानि भूतानि ह्यचराणि चराणि च। वृद्धिंगतानि तान्येव मनुसर्गोद्भवानि तु ७ अनुसर्गस्य कर्तारो मरीच्याद्या महर्षयः। वसिष्ठान्ता महाभाग ब्रह्मणो मानसोद्भवाः ८ सर्गे तु भूतानि धियश्च खानि ख्यातानि सर्वं सृजते महात्मा। स एव पश्चाच्चतुरास्यरूपी मुनिस्वरूपी च सृजत्यनन्तः ९ ॥ इति श्रीनरसिंहपुराणे चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः।

भरद्वाज उवाच ॥

रुद्रसर्गं तु मे ब्रूहि विस्तरेण महामते। पुनः सर्वे मरीच्याद्याः ससृजुस्ते कथं पुनः १ मित्रावरुणपुत्रत्वं वसिष्ठस्य कथं भवेत्। ब्रह्मणो मनसः पूर्वमुत्पन्नस्य महामते २

सूत उवाच ॥

रुद्रसृष्टिं प्रवक्ष्यामि तत्सर्गाश्चैव सत्तम। प्रतिसर्गं मुनीनां तु विस्तराद्वदतः शृणु ३ कल्पादावात्मनस्तुल्यं सुतं प्रध्यायतस्ततः। प्रादुरासीत् प्रभोरङ्के कुमारो नीललोहितः ४ अर्धनारीनरवपुः प्रचण्डोतिशरीरवान्। तेजसा भासयन् सर्वा दिशश्च प्रदिशश्च सः ५ तं दृष्ट्वा तेजसा दीप्तं प्रत्युवाच प्रजापतिः। विभजात्मानमद्य त्वं मम वाक्यान्महामते ६ इत्युक्तो ब्रह्मणा त्रिन रुद्रस्तेन प्रतापवान्। स्त्रीभावं पुरुषत्वं च पृथक्पृथगथाकरोत् ७ बिभेद पुरुषत्वं च दशधा चैकधा च सः। तेषां नामानि वक्ष्यामि शृणु मे द्विजसत्तम ८ अजैकपादहिर्बुध्नः कपाली रुद्र एव च। हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः ९ वृषाकपिश्च शंभुश्च कपर्दी रैवतस्तथा एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः १० स्त्रीत्वं चैव तथा रुद्रो बिभेद दशधैकधा। उमैव बहुरूपेण

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पत्नी सैव व्यवस्थिता ११ तपः कृत्वा जले घोरमुत्तीर्णः स य-
दा पुरा । तदा स सृष्टवान् देवो रुद्रस्तत्र प्रतापवान् १२
तपोबलेन विप्रेन्द्र भूतानि विविधानि च । पिशाचवदनांश्चैव
सिंहोष्ट्रमकराननान् १३ वेतालप्रमुखान् भूतान न्यांश्चैव सह-
स्रशः । विनायकानामुग्राणां त्रिंशत्कोटयर्धमेव च १४ अन्यका
र्यं समुद्दिश्य सृष्टवान् स्कन्दमेव च । एवंप्रकारो रुद्रोसौ मया ते
कीर्तितः प्रभुः १५ अनुसर्गं मरीच्यादेः कथयामि निबोध मे ।
देवादिस्थावरान्ताश्च प्रजाः सृष्टाः स्वयंभुवा १६ यदास्य च
प्रजाः सर्वा नव्यवर्धन्त धीमतः । तदा मानसपुत्रान् ससदृशाना-
त्मनोऽसृजत् १७ मरीचिमत्र्यंगिरसं पुलस्त्यं पुलहं क्रतुम् । प्र
चेतसं वसिष्ठं च भृगुं चैव महामतिः १८ नव ब्रह्माण इत्येते पु-
राणे निश्चयं गताः । अग्निश्च पितरश्चैव ब्रह्मपुत्रौ तु मानसौ १९
सृष्टिकाले महाभागौ ब्रह्मन्स्वायंभुवोद्गतौ । शतरूपां च सृष्ट्वा तु
कन्यां स मनवे ददौ २० तस्माच्च पुरुषादेवी शतरूपा व्यजायत
प्रियव्रतोत्तानपादौ प्रसूतिं चैव कन्यकाम् २१ ददौ प्रसूतिं
दक्षाय मनुःस्वायंभुवः सुताम् । प्रसूत्यां च तदा दक्षः श्चतुर्वि-
शतिकं तथा २२ ससर्ज कन्यकास्तासां शृणु नामानि मेऽधुना।
श्रद्धा प्रीतिर्धृतिस्तुष्टिः पुष्टिर्मेधा तथा क्रिया २३ बुद्धिर्लज्जा
वपुः शान्तिः सिद्धिः कीर्तिस्त्रयोदशी । अमत्यार्थं प्रजग्राह ध-
र्मो दाक्षायणीं प्रभुः २४ श्रद्धादीनां तु पत्नीनां जाताः कामा-
दयः सुताः । धर्मस्य पुत्रपौत्राद्यैर्धर्मवंशो विवर्धितः २५ ताभ्यः
सृष्टा यवीयस्यस्तासां नामानि कीर्तये । संभूतिश्चानुसूया च स्मृ-
तिः प्रीतिः क्षमा तथा २६ सन्नतिश्चाथ सत्या च तुर्या ख्याति-
र्द्विजोत्तम । तद्वत्पुत्रौ महाभाग मातरिश्वाथ सत्यवान् २७
स्वाहाथ दशमी ज्ञेया स्वधा चैकादशी स्मृता । एताश्च दत्ता द-

१ 'पिशाचान्राक्षसांश्चैवे' ति (ग) पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

क्षेण ऋषीणां भावितात्मनाम् २८ मरीच्यादीनां तु ये पुत्रास्ता-
नहं कथयामि ते । पत्नी मरीचेः संभूतिर्जज्ञे सा कश्यपं मुनिम्
२९ स्मृतिश्चांगिरसः पत्नी प्रसूताः कन्यकास्तथा । सिनीवाली
कुहूश्चैव राका चानुमतिस्तथा ३० अनसूया तथा चात्रेर्जज्ञे पु-
त्रानकल्मषान् । सोमं दुर्वाससं चैव दत्तात्रेयं च योगिनम् ३१
[1]यो सावग्निरभीमानी ब्रह्मणस्तनयोग्रजः । तस्मात्स्वाहा सुताँल्ले-
भे त्रीनुदारौजसो नृप ३२ पावकं पवमानं च शुचिं चापि ज-
लाशयम् । तेषां तु सन्ततावन्ये चत्वारिंशच्च पञ्च च ३३ कथ्य
न्ते वन्हयश्चैते पिता पुत्रत्रयं च यत् । एवमेकोनपञ्चाशद्वन्हयः
परिकीर्तिताः ३४ पितरो ब्रह्मणा सृष्टा व्याख्याता ये मया
तव । तेभ्यः स्वधा सुते जज्ञे मेनां वै [2]धारिणीं तथा ३५ प्रजाः
सृजेति व्यादिष्टः पूर्वं दक्षः स्वयंभुवा । यथा ससर्ज भूतानि
तथा मे शृणु सत्तम ३६ मनसैव हि भूतानि पूर्वं दक्षोऽसृजन्मु-
निः । देवानृषींश्च गंधर्वानसुरान्पन्नगांस्तथा ३७ यदास्य म-
नसा जाता नाभ्यवर्धत ते द्विज । तदा संचिन्त्य स मुनिः सृ-
ष्टिहेतोः प्रजापतिः ३८ मैथुनेनैव धर्मेण सिसृक्षुर्विविधाःप्रजाः ।
[3]अतिक्नीमुद्वहन्कन्यां वीरणस्य प्रजापतेः ३९ षष्टिं दक्षोऽसृजत्क
न्यां वीरण्यामिति नः श्रुतम् । ददौ स दश धर्माय कश्यपाय
त्रयोदश ४० सप्तविंशति सोमाय चतस्रोरिष्टनेमिने । द्वे चैव
बहुपुत्राय द्वे चैवाङ्गिरसे तथा ४१ द्वे कृशाश्वाय विदुषे तद-
पत्यानि मे शृणु । विश्वेदेवांस्तु विश्वाया साध्या साध्यानसूयत
४२ मरुत्वत्यां मरुत्वन्तो वसोस्तु वसवः स्मृताः । भानोस्तु
भानवो देवा मुहूर्तायां मुहूर्तजाः ४३ लम्बायाश्चैव घोषाख्यो
नागवीथिश्च जामिजः । पृथिवीविषयं सर्वं मरुत्वत्यामजायत

---

१ यो सावित्यादयस्त्रयः श्लोका ‘ क ख ’ पुस्तके न विद्यन्ते । २ बोधारी-
णीमिति ‘ ख ’ पुस्तके पाठः । ३ ‘ अशक्नीं ’ इति ‘ ख ’ पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

४४ संकल्पया च संकल्पः पुत्रो जज्ञे महामते । ये त्वनेकवसुप्राणा देवा ज्योतिःपुरोगमाः ४५ वसवोऽष्टौ समाख्यातास्तेषां नामानि मे शृणु । आपो ध्रुवश्च सोमश्च धर्मश्चैवानिलोनलः ४६ प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः । तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः ४७ साध्याश्च बहवः प्रोक्तास्तत्पुत्राश्च सहस्रशः । अदितिर्दितिर्दनुश्चैव अरिष्टा सुरसा स्वसा ४८ सुरभिर्विनता चैव तथा क्रोधवशा इरा । कद्रूर्मुनिश्च धर्मज्ञ तदपत्यानि मे शृणु ४९ अदित्यां कश्यपाज्जाताः पुत्रा द्वादश शोभनाः । तानहं नामतो वक्ष्ये शृणुष्व गदतो मम ५० भर्गांशुश्चार्यमा चैव मित्रोऽथ वरुणस्तथा । सविता चैव धाता च विवस्वांश्च महामते ५१ त्वष्टा पूषा तथा चेन्द्रो द्वादशो विष्णुरुच्यते । दित्याः पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतम् ५२ हिरण्याख्यो महाकायो वाराहेण तु यो हतः । हिरण्यकशिपुश्चैव नरसिंहेन यो हतः ५३ अन्ये च बहवो दैत्या दितिपुत्राश्च दानवाः । अरिष्टायां तु गंधर्वा जज्ञिरे कश्यपात्तथा ५४ सुरसायामथोत्पन्ना विद्याधरगणा बहु । गा वै स जनयामास सुरभ्यां कश्यपो मुनिः ५५ विनतायां तु द्वौ पुत्रौ प्रख्यातौ गरुडारुणौ । गरुडो देवदेवस्य विष्णोरमिततेजसः ५६ वाहनत्वमियात्प्रीत्या अरुणः सूर्यसारथिः । ताम्रायां कश्यपाज्जाताः षट्पुत्रास्तान्निबोध मे ५७ अश्वा उष्ट्रा गर्दभाश्च हस्तिनो गवया मृगाः । क्रोधायां जज्ञिरे तद्वद्ये भूम्यां दुष्टजातयः ५८ इरा वृक्षलतावल्लीशणजातीश्च जज्ञिरे । स्वसा तु यक्षरक्षांसि मुनिरप्सरसस्तथा ५९ कद्रूपुत्रा महानागा दन्दशूका विषोल्बणाः । सप्तविंशति याः प्रोक्ता सोमपत्न्योऽथ सुव्रताः ६० तासां पुत्रा महासत्त्वा बुधाद्यास्त्वभवन् द्विज । अरिष्टनेमिपत्नीनामपत्यानीह षोडश ६१ बहुपुत्रस्य विदुषश्चत्वारो विद्युदादयः । प्रत्यं-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

गिरसुताः श्रेष्ठा ऋषयश्चर्षिसंस्कृताः ६२ कृशाश्वस्य तु देवर्षेर्देवाश्च ऋषयः सुताः । एते युगसहस्रांते जायन्ते पुनरेव हि ६३ एते कश्यपदायादाः कीर्तिताः स्थाणुजंगमाः । स्थितौ स्थितस्य देवस्य नरसिंहस्य धर्मतः ६४ एता विभूतयो विप्र मया ते परिकीर्तिताः । कथिता दक्षकन्यानां मया तेऽपत्यसंततिः ६५ श्रद्धावान् संस्मरेदेतां स सुसन्तानवान् भवेत्६६सर्गानुसर्गौ कथितौ मया ते समासतः सृष्टिविवृद्धिहेतोः। पठन्ति ये विष्णुपराः सदा नराः इदं द्विजास्ते विमला भवन्ति ६७ ॥ इति श्रीनृसिंहपुराणे सृष्टिकथनेपञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ।

॥ सूतउवाच ॥

सृष्टिस्ते कथिता विष्णोर्मयास्य जगतो द्विज । देवदानवयक्षाद्या यथोत्पन्ना महात्मनः १ यमुद्दिश्य त्वया पृष्टः पुराहमृषिसंनिधौ । मित्रावरुणपुत्रत्वं वसिष्ठस्य कथं त्विति २ तदिदं कथयिष्यामि पुण्याख्यानं पुरातनम् । शृणुष्वेकाग्रमनसा भरद्वाज विशेषतः ३ सर्वधर्मार्थतत्त्वज्ञः सर्ववेदविदांवरः । पारगः सर्वविद्यानां दक्षो नाम प्रजापतिः ४ तेन दत्ता शुभाः कन्याः सर्वाः कमललोचनाः । सर्वलक्षणसंपूर्णाः कश्यपाय त्रयोदश । ५ तासां नामानि वक्ष्यामि निबोधत ममाधुना । अदितिर्दितिर्दनुः काला मुहूर्ता सिंहिका मुनिः ६ ईरा क्रोधा च सुरभिर्विनता सुरसा स्वसा । कद्रूश्च सरमा चैव या तु देवशुनी स्मृता ७ दक्षस्यैता दुहितरस्ताः प्रादात्कश्यपाय सः । तासां ज्येष्ठा वरिष्ठा च अदितिर्नामतो द्विज ८ अदितिः सुषुवे पुत्रान् द्वाद-

---

१ '–देवप्रहरणाः सुता ' इति ' ग ' पुस्तके पाठः । २ ' धीमत ' इति ' ग ' पुस्तके पाठः । ३ ' वृता क्रोष्टा च सुरभिः ' इति ' क ' पुस्तके ' वृत्रा क्रोष्टा ' चेति ' ख ' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

शाग्निसमप्रभान् । तेषां नामानि वक्ष्यामि शृणुष्व गदतो मम ९ यैरिदं वासरं नक्तं वर्त्तते क्रमशः सदा । भगोंशस्त्वर्यमा चैव मित्रोथ वरुणस्तथा १० सविता चैव धाता च विवस्वांश्च महामते । त्वष्टा पूषा तथैवेन्द्रो विष्णुर्द्वादशमः स्मृतः ११ एते च द्वादशादित्यास्तपन्ते वर्षयन्ति च । तस्याश्च मध्यमः पुत्रो वरुणो नाम नामतः १२ लोकपाल इति ख्यातो वारुण्यां दिशि शब्द्यते । पश्चिमस्य समुद्रस्य प्रतीच्यां दिशि राजते १३ जातरूपमयः श्रीमानास्ते नाम शिलोच्चयः । सर्वरत्नमयैः शृंगैर्धातुमस्रवणान्वितैः १४ संयुक्तो भाति शैलेशो नानारत्नमयः शुभः । महादरीगुहाभिश्च सिंहशार्दूलनादितः १५ नानाविविक्तभूमीषु सिद्धगन्धर्वसेवितः । यस्मिन्गते दिनकरे तमसा पूर्यते जगत् १६ तस्य शृंगे महादिव्या जाम्बूनदमयी शुभा । रम्या मणिमयैः स्तम्भैर्विहिता विश्वकर्मणा १७ पुरी विश्वावती नाम समृद्धा भोगसाधनैः । तस्यां वरुण आदित्यो दीप्यमानः स्वतेजसा १८ पाति सर्वानिमाँल्लोकान्नियुक्तो ब्रह्मणा स्वयम् । उपास्यमानो गन्धर्वैस्तथैवाप्सरसां गणैः १९ दिव्यगन्धानुलिप्तांगो दिव्याभरणभूषितः । कदाचिद्वरुणो यातो मित्रेण सहितो वनम् २० कुरुक्षेत्रे शुभे रम्ये सदा ब्रह्मर्षिसेविते । नानापुष्पफलोपेते नानातीर्थसमाकुले २१ आश्रमा यत्र दृश्यन्ते मुनीनामूर्ध्वरेतसाम् । तस्मिंस्तीर्थे समाश्रित्य बहुपुष्पफलोदके २२ चीरकृष्णाजिनधरौ चरन्तौ तप उत्तमम् । तत्रैकस्मिन्वनोद्देशे विमलोदो ह्रदः शुभः २३ बहुगुल्मलताकीर्णो नानापक्षिनिषेवितः । नानातरुवनच्छन्नो नलिन्याचोपशोभितः २४ पौण्डरीक इति ख्यातो मीनकच्छपसेवितः । ततस्तु मित्रावरुणौ भ्रातरौ वनचारिणौ । तं तु देशं गतौ देवौ विचरन्तौ यदृच्छया २५ ताभ्यां तत्र तदा दृष्टा उर्वशी तु वराप्सराः । स्नायन्ती सहितान्याभिः सखीभिः सा वरानना । गायन्ती च हसन्ती च विश्वस्ता नि-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

र्जने वने २६ गौरी कमलगर्भाभा स्निग्धकृष्णशिरोरुहा । पद्म-पत्रविशालाक्षी रक्तोष्ठी मृदुभाषिणी २७ शंखकुन्देन्दुधवलैर्द-न्तैरविरलैः समैः । सुभ्रूः सुनासा सुमुखी सुललाटा मनस्विनी २८ सिंहवत्सूक्ष्ममध्याङ्गी पीनोरुजघनस्तनी । मधुरालापचतु-रा सुमध्या चारुहासिनी २९ रक्तोत्पलकरा तन्वी सुपदी विन-यान्विता । पूर्णचन्द्रनिभा बाला मत्तद्विरदगामिनी ३० दृष्ट्वा तस्यास्तु तद्रूपं तौ देवौ विस्मयं गतौ । यस्या हास्येन लास्येन स्मितेन ललितेन च ३१ मृदुना वायुना चैव सीतानिलसुग-न्धिना । मत्तभ्रमरगीतेन पुंस्कोकिलरुतेन च ३१ सुस्वरेण हि गीतेन उर्वश्या मधुरेण च । ईक्षितौ च कटाक्षेण स्कन्दतुस्ता-वुभावपि ३३ निमेः शापादथोत्क्रम्य स्वदेहान्मुनिसत्तम । वसिष्ठमित्रावरुणात्मजोसीत्यतोदुरागत्य हि विश्वदेवाः (?) । रेतस्त्रिभागं कमले चरन्तं वसिष्ठ एवं तु पितामहोक्तेः ३४ बहु-धार्पतितं रेतः कमलेथ स्थले जले । अरविन्दे वसिष्ठस्तु जातस्तु मुनिसत्तमः ३५ स्थले त्वगस्त्यः सम्भूतो जले मत्स्यो महा-द्युतिः । स तत्र जातो मतिमान् वसिष्ठः कुम्भे त्वगस्त्यः सलि-लेथ मत्स्यः ३६ स्थानत्रये तत्पतितं समानं मित्रस्य यस्माद्वरु-णस्य रेतः । एतस्मिन्नेव काले तु गता सा उर्वशी दिवम् ३७ उपेत्य तानृषीन् देवौ गतौ भूयः स्वमाश्रयम् । यमावपि तु तप्येते पुनरुग्रं परं तपः ३८ तपसा प्राप्तुकामौ तौ परं ज्योतिः सनातनम् । तपस्यन्तौ सुरश्रेष्ठौ ब्रह्मागत्येदमब्रवीत् ३९ मित्रा-वरुणकौ देवौ पुत्रवन्तौ महाद्युती । सिद्धिर्भविष्यति यथा युव-योर्वैष्णवी पुनः ४० स्वाधिकारेण स्थीयेतामधुना लोकसा-

१ 'सुशीले' ति 'ग' पुस्तके पाठः । २ 'करसंमित मध्याङ्गी' ति 'ग' पुस्तके पाठः । ३ 'वासिष्ठ मित्रावरुणात्मजा सीन्मित्रस्य देवस्य पितामहोक्तेः' इदमेवार्धं 'क ख' पुस्तकयोः । ४ 'त्रिधासमभवद्रेत' इति च । ५ 'शयर' इति 'क ख' पुस्तकयोः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

क्षिकौ । इत्युक्त्वान्तर्दधे ब्रह्मा तौ स्थितौ स्वाधिकारकौ ४१ एवं ते कथितं विप्र वसिष्ठस्य महात्मनः । मित्रावरुणपुत्रत्वमग-स्त्यस्य च धीमतः ४२ इदं पुंसीयमाख्यानं वारुणं पापनाश-नम् । पुत्रकामास्तु ये केचिच्छृण्वन्तीदं शुचिव्रताः ४३ अचि-रादेव पुत्रांस्ते लभन्ते नात्र संशयः । यश्चैतत्पठते नित्यं हव्यकव्ये द्विजोत्तमः ४४ देवाश्च पितरस्तस्य तृप्ता यान्ति परं सुखम् । यश्चैतच्छृणुयान्नित्यं प्रातरुत्थाय मानवः ४५ नन्दते स सुखं भूमौ विष्णुलोकं स गच्छति । इत्येतदाख्यानमिदं मयेरितं पुरातनं वेदविदैरुदीरितम् । पठिष्यते यस्तु शृणोति सर्वदा स याति शुद्धो हरिलोकमञ्जसा ४६ ॥ ॥ इतिश्रीनृसिंहपुराणे पुंसवनाख्यानं नाम षष्ठोध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ।

॥ श्री भरद्वाजउवाच ॥

मार्कण्डेयेन मुनिना कथं मृत्युः पराजितः ।
एतदाख्याहि मे सूत त्वयैतत्सूचितं पुरा ॥ १ ॥

॥ सूत उवाच ॥

इदं तु महदाख्यानं भरद्वाज शृणुष्व मे । शृण्वन्तु ऋषयश्चेमे पुरावृत्तं ब्रवीम्यहम् २ कुरुक्षेत्रे महापुण्ये व्यासपीठे वरा-श्रमे । तत्रासीनं मुनिवरं कृष्णद्वैपायनं मुनिम् ३ कृतस्नानं कृतजपं मुनिशिष्यैः समावृतम् । वेदवेदार्थतत्त्वज्ञं सर्वशास्त्र-विशारदम् ४ प्रणिपत्य यथान्यायं शुकः परमधार्मिकः । इममेवार्थमुद्दिश्य तं पप्रच्छ कृताञ्जलिः ५ यमुद्दिश्य वयं पृष्टा-स्त्वयात्र मुनिसंनिधौ । नरसिंहस्य भक्तेन कृततीर्थनिवासिना ६

१ 'ब्रह्मविदै' रिति 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ श्रीशुक उवाच ॥

मार्कण्डेयेन मुनिना कथं मृत्युः पराजितः ।
एतदाख्याहि मे तात श्रोतुमिच्छामि तेऽधुना ॥ ७ ॥

॥ व्यास उवाच ॥

मार्कण्डेयेन मुनिना यथा मृत्युः पराजितः । तथा ते कथयिष्यामि शृणु वत्स[1] महामते ८ शृण्वन्तु मुनयश्चेमे कथ्यमानं मयाधुना । मच्छिष्याश्चैव शृण्वन्तु महदाख्यानमुत्तमम् ९ भृगोः ख्यात्यां समुत्पन्नो मृकण्डुर्नाम वै सुतः । सुमित्रा नाम वै पत्नी मृकण्डोस्तु महात्मनः १० धर्मज्ञा धर्मनिरता पतिशुश्रूषणे रता । तस्यां तस्य सुतो जातो मार्कण्डेयो महामतिः ११ भृगुपौत्रो महाभागो बालत्वेपि महामतिः । ववृधे वल्लभो बालः पित्रा तत्र कृतक्रियः १२ तस्मिन्नेव जातमात्रे तु आगमी[2] कश्चिदब्रवीत् वर्षे द्वादशमे पूर्णे मृत्युरस्य भविष्यति १३ श्रुत्वा तन्मातृपितरौ दुःखितौ तौ बभूवतुः । विदूयमानहृदयौ तं निरीक्ष्य महामते १४ तथापि तत्पिता तस्य यत्नात्काले क्रियां[3] ततः । चकार सर्वां मेधावी उपनीतो गुरोर्गृहे १५ वेदानेवाभ्यसन्नास्ते गुरुशुश्रूषणोद्यतः । स्वीकृत्य वेदशास्त्राणि सपुनर्गृहमागतः १६ मातापितृन्नमस्कृत्य पादयोर्विनयान्वितः । तस्थौ तत्र गृहे धीमान् मार्कण्डेयो महामुनिः १७ तं निरीक्ष्य महात्मानं सत्यज्ञं च विचक्षणम् । दुःखितौ तौ भृशं तत्र तन्मातापितरौ शुक[4] १८ तौ दृष्ट्वा दुःखमापन्नौ मार्कण्डेयो महामतिः । उवाच वचनं तत्र किमर्थं दुःखमीदृशम् १९ सदैतत्कुरुषे मातस्तातेन सह धीमता वक्तुमर्हसि दुःखस्य कारणं मम पृच्छतः २० इत्युक्ता तेन पुत्रेण माता तस्य महात्मनः । कथयामास तत्सर्वमागमी[5]

---

१ ‘ वश्य ’ इति ‘ क ख ’ पुस्तकयोः । २ ‘ आदेशी ’ ति ‘ ग ’ पुस्तके पाठः । ३ नामकरणादिसंस्कारान् । ४ शुचा ’ इति वा पाठो ‘ ग ’ पुस्तके । ‘ आदेशि ’ ‘ ग ’ पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यदुवाच ह २१. तच्छ्रुत्वासौ मुनिः प्राह मातरं पितरं पुनः । पित्रा सार्धं त्वया मातर्न कार्यं दुःखमण्वपि २२ अपनेष्यामि भो मृत्युं तपसा नात्र संशयः । यथा चाहं चिरायुः स्यां तथा कुर्यामहं तपः २३ इत्युक्त्वा तौ समाश्वास्य पितरौ वनमभ्यगात् । वल्लीवटं नाम वनं नानाऋषिनिषेवितम् २४ तत्रासौ मुनिभिः सार्धमासीनं स्वपितामहम् । भृगुं ददर्श धर्मज्ञं मार्कण्डेयो महामतिः २५ अभिवाद्य यथान्यायं मुनींश्चैव स धार्मिकः । कृतांजलिपुटो भूत्वा तस्थौ तत्पुरतो दमी २६ गतायुषं ततो दृष्ट्वा पौत्रं बालं महामतिः । भृगुराह महाभागं मार्कण्डेयं तदा शिशुम् १.७ किमागतोसि पुत्रात्र पितुस्ते कुशलं पुनः । मातुश्च बान्धवानां च किमागमनकारणम् २८ इत्येवमुक्तो भृगुणा मार्कण्डेयो महामतिः । उवाच सकलं तस्मै आदेशिवचनं तदा २९ पौत्रस्य वचनं श्रुत्वा भृगुस्तु पुनरब्रवीत् । एवं सति महाबुद्धे किं त्वं कर्म चिकीर्षसि ३०

॥ मार्कण्डेय उवाच ॥

भूतापहारिणं मृत्युं जेतुमिच्छामि साम्प्रतम् ।
शरणं त्वां प्रपन्नोस्मि तत्रोपायं वदस्व नः ॥ ३१ ॥

॥ भृगुरुवाच ॥

नारायणमनाराध्य तपसा महता सुत । को जेतुं शक्नुयान्मृत्युं तस्मात्त्वं तपसार्चय ३२ तमनन्तमजं विष्णुमच्युतं पुरुषोत्तमम् । भक्तप्रियं सुरश्रेष्ठं भक्त्या त्वं शरणं व्रज ३३ तमेव शरणं पूर्वं गतवान्नारदो मुनिः । तपसा महता वत्स नारायणमनामयम् ३४ तत्प्रसादान्महाभाग नारदो ब्रह्मणः सुतः । जरां मृत्यं विजित्याशु दीर्घायुर्वर्धते सुखम् ३५

१ ' भल्लीवनं ' इति ' ख ' पुस्तके । २ ' ज्ञानवतां वर ' . ' क ख ' पुस्तकयोः । ३ ' नाराय णमनामय ' मिति ' ग ' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तमृते पुण्डरीकाक्षं नारसिंहं जनार्दनम् । कः कुर्यान्मानवो वत्स मृत्युसञ्चानिवारणम् ॥ ३६ ॥ तमनन्तमजं विष्णुं कृष्णं जिष्णुं श्रियः पतिम् । गोविन्दं गोपतिं देवं सततं शरणं व्रज ॥ ३७ ॥ नरसिंहं महादेवं यदि पूजयसे सदा । वत्स जेतासि मृत्युं त्वं सततं नात्र संशयः ॥ ३८ ॥

॥ व्यास उवाच ॥

उक्तः पितामहेनैवं भृगुणा पुनरब्रवीत् ।
मार्कण्डेयो महातेजा विनयात्स्वपितामहम् ॥ ३९ ॥

॥ मार्कण्डेय उवाच ॥

आराध्यः कथितस्तात विष्णुर्विश्वेश्वरः प्रभुः । कथं कुत्र मया कार्यमच्युताराधनं गुरो । येनासौ मम तुष्टस्तु मृत्युं सद्यो ऽपनेष्यति ॥ ४० ॥

॥ भृगुरुवाच ॥

तुङ्गभद्रेति विख्याता या नदी सह्यपर्वते । तत्र भद्रवटे वत्स त्वं प्रतिष्ठाप्य केशवम् ४१ आराधय जगन्नाथं गन्धपुष्पादिभिः क्रमात् । हृदि कृत्वेन्द्रियग्रामं मनः संयम्य तत्त्वतः ४२ हृत्पुण्डरीके देवेशं शंखचक्रगदाधरम् । ध्यायन्नेकमना वत्स द्वादशाक्षरमभ्यसन् ४३ ॐनमो भगवते वासुदेवाय । इमं मन्त्रं हि जपतो देवदेवस्य शार्ङ्गिणः । प्रीतो भवति विश्वात्मा मृत्युं येनापनेष्यति ॥ ४४ ॥

---

१ 'भक्तानां वत्सलः कुर्यान्मातृसेवा निवारणम्' इति 'ग' पुस्तके । २ विनयानतकन्धरः 'क ख' पुस्तकयोः पाठः । ३ 'आराधितश्च भगवान्मम मृत्युं हरेदिति कथमत्र मया कार्यमच्युताराधनं गुरो' इति 'ग' पुस्तके । ४ तुङ्गभद्रा च भगिनी द्वे नद्यौ सह्यसम्भवे इति 'ग' पुस्तके । ५ 'तयोर्भद्रान्तरे' इति 'ग' पुस्तके । ६ 'विशुद्धेनान्तरात्मना' इति 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ व्यास उवाच ॥

इत्युक्तस्तं प्रणम्याथ स जगाम तपोवनम् ४५ सह्यपादोद्भवायास्तु भद्रायास्तटमुत्तमम् । नानाद्रुमलताकीर्णं नानापुष्पोपशोभितम् ४६ गुल्मवेणुलताकीर्णं नानामुनिजनाकुलम् । तत्र विष्णुं प्रतिष्ठाप्य गन्धधूपादिभिः क्रमात् ४७ पूजयामास देवेशं मार्कण्डेयो महामुनिः । पूजयित्वा हरिं तत्र तपस्तेपे सुदुष्करम् ४८ निराहारो मुनिस्तत्र वर्षमेकमतन्द्रितः । मात्प्रोक्तकाले त्वासन्ने दिने तत्र महामतिः ४९ स्नात्वा यथोक्तविधिना कृत्वा विष्णोस्तथार्चनम् । हृदि कृत्वेन्द्रियग्रामं विशुद्धेनान्तरात्मना ५० आसनं स्वस्तिकं बद्धा कृत्वासौ प्राणसंयमम् । ॐकारोच्चारणाद्धीमान् हृत्पद्मं स विकासयन् ५१ तन्मध्ये रविसोमाग्निमण्डलानि यथाक्रमम् । कल्पयित्वा हरेः पीठं तस्मिन् देशे सनातनम् ५२ पीताम्बरधरं [१]कृष्णं शंखचक्रगदाधरम् । भावपुष्पैः समभ्यर्च्य मनस्तस्मिन्निवेश्य च ५३ ब्रह्मरूपं हरिं ध्यायंस्ततो मन्त्रं[२]मुदीरयत् । ॐनमो भगवते वासुदेवाय ॥ ५४ ॥

॥ व्यास उवाच ॥

इत्येवं ध्यायतस्तस्य मार्कण्डेयस्य धीमतः ५५ मनस्तत्रैव संलग्नं देवदेवे जगत्पतौ । ततो यमाज्ञया तत्र आगता यमकिंकराः ५६ पाशहस्तास्तु तं नेतुं विष्णुदूतैस्तु ते हताः । शूलैः प्रहत्यमानास्तु द्विजं मुक्त्वा ययुस्तदा ५७ वयं निवर्त्य गच्छामो मृत्युरेवागमिष्यति ।

॥ विष्णुदूता ऊचुः ॥

यत्र नः स्वामिनो नाम लोकनाथस्य शार्ङ्गिणः ।
को यमस्तत्र मृत्युर्वा कालः कलयतां वरः ॥ ५८ ॥

---

१ 'श्याम' मिति 'ग' पुस्तके । २ 'मुदीरयान्नि' ति 'ग' पुस्तके प्रकृते त्वडभावश्छन्दसः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ व्यास उवाच ॥

आगत्य स्वयमेवाह मृत्युः पार्श्वं महात्मनः । मार्कण्डेयस्य बभ्राम विष्णुकिङ्करशङ्कया ५९ तेप्युद्यम्याशु मुशलानायसान् विष्णुकिङ्कराः । विष्ण्वाज्ञया हनिष्यामो मृत्युमद्येति संस्थि ताः ६० ततो विष्ण्वर्पितमना मार्कण्डेयो महामतिः । तुष्टाव प्रणतो भूत्वा देवदेवं जनार्दनम् ६१ विष्णुनैवोदितं यत्तत्स्तोत्रं कर्णे महात्मनः । सुभाषितेन मनसा तेन तुष्टाव माधवम् ६२

मार्कण्डेय उवाच ॥

नारायणं सहस्राक्षं पद्मनाभं पुरातनम् । प्रणतोस्मि हृषीकेशं किं मे मृत्युः करिष्यति ६३ गोविन्दं पुण्डरीकाक्षमनन्तमजम-व्ययम् । केशवं च प्रपन्नोस्मि किं मे मृत्युः करिष्यति ६४ वा-सुदेवं जगद्योनिं भानुवर्णमतीन्द्रियम् । दामोदरं प्रपन्नोस्मि किं मे मृत्युः करिष्यति ६५ शंखचक्रधरं देवं छन्नरूपिणमव्ययम् । अधोक्षजं प्रपन्नोस्मि किं मे मृत्युः करिष्यति ६६ वाराहं वामनं विष्णुं नरसिंहं जनार्दनम् । माधवं च प्रपन्नोस्मि किं मे मृत्युः करिष्यति ६७ पुरुषं पुष्करं पुण्यं क्षेमबीजं जगत्पतिम् । लोक नाथं प्रपन्नोस्मि किं मे मृत्युः करिष्यति ६८ भूतात्मानं महा-त्मानं जगद्योनिमयोनिजम् । विश्वरूपं प्रपन्नोस्मि किं मे मृत्युः करिष्यति ६९ सहस्रशिरसं देवं व्यक्ताव्यक्तं सनातनम् । महा-योगं प्रपन्नोस्मि किं मे मृत्युः करिष्यति ७० इत्युदीरितमाक-र्ण्य स्तोत्रं तस्य महात्मनः । अपयातस्ततो मृत्युर्विष्णुदूतैश्च पी-डितः ७१ इति तेन जितो मृत्युर्मार्कण्डेयेन धीमता । प्रसन्ने पुण्डरीकाक्षे नृसिंहे नास्ति दुर्लभम् ७२ मृत्युंजयमिदं पुण्यं मृ-त्युप्रशमनं शुभम् । मार्कण्डेयहितार्थाय स्वयं विष्णुरुवाच ह ७३

---

१ इदं वाक्यं 'ग' पुस्तके न । २ महात्मान मित्येवान्यत्र 'ख ग' पुस्तकयोः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

य इदं पठते भक्त्या त्रिकालं नियतः शुचिः। नाकाले तस्य मृत्युः स्यान्नरस्याच्युतचेतसः ७४ हृत्पद्ममध्ये पुरुषं पुराणं नारायणं शाश्वतमादिदेवम् । संचिन्त्य सूर्यादपि राजमानं मृत्युं स योगी जितवांस्तदैव ७५ इति श्रीनृसिंहपुराणे मार्कण्डेयमृत्युंजयो नाम सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ।

॥ श्रीव्यास उवाच ॥

मृत्युश्च किङ्कराश्चैव विष्णुदूतैः प्रपीडिताः ॥
स्वराज्ञस्तेनुनिर्वेशं गत्वा ते चुक्रुशुर्भृशम् ॥ १ ॥

॥ मृत्युकिङ्करा ऊचुः ॥

शृणु राजन् वचोऽस्माकं तवाग्रे यद्ब्रवीमहे । त्वदादेशाद्वयं गत्वा मृत्युं संस्थाप्य दूरतः २ ब्राह्मणस्य समीपं च भृगोः पौत्रस्य सत्तमः । तं ध्यायमानं कमपि देवमेकाग्रमानसम् ३ गंतुं न शक्तास्तत्पार्श्वे वयं सर्वे महामते । यावत्तावन्महाकायैः पुरुषैर्मुशलैर्हताः ४ वयं निवृत्तास्तद्वीक्ष्य मृत्युस्तत्र गतः पुनः । अस्मान्निर्भर्त्स्य तत्रायं तैर्नरैर्मुशलैर्हताः ५ एवमत्र तमानेतुं ब्राह्मणं तपसि स्थितम् । अशक्ता वयमेवात्र मृत्युना सह वै प्रभो ६ तद्ब्रवीहि महाभाग यद्ब्रह्म ब्राह्मणस्य तु । देवं कं ध्यायते विप्रः के वा ते यैर्हता वयम् ७

॥ व्यास उवाच ॥

इत्युक्तः किङ्करैः सर्वैं मृत्युना च महामते ॥
ध्यात्वा क्षणं महाबुद्धिः प्राह वैवस्वतो यमः ८ ॥

---

१ 'संचुक्रुशु' रिति 'क ख' पुस्तकयोः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ यम उवाच ॥

शृण्वन्तु किङ्कराः सर्वे मृत्युश्चान्ये च मे वचः। सत्यमेतत्प्रवक्ष्यामि ज्ञानं यद्योगमार्गतः[1] ९ भृगोः पौत्रो महाभागो मार्कण्डेयो महामतिः। स ज्ञात्वाद्यात्मनः कालं गतो मृत्युजिगीषया १० भृगुणोक्तेन मार्गेण स तेपे परमं तपः। हरिमाराध्य मेधावी जपन्वै द्वादशाक्षरम् ११ एकाग्रेणैव मनसा ध्यायते हृदि केशवम्। सततं योगयुक्तस्तु स मुनिस्तत्र किङ्कराः १२ हरिध्यानमहादक्षा बलं तस्य महामुनेः। नान्यद्वै माप्तकालस्य बलं पश्यामि किङ्कराः १३ हृदिस्थे पुण्डरीकाक्षे सततं भक्तवत्सले। पश्यन्तं विष्णुभूतं नु को हि स्यात् केशवाश्रयम् १४ तेपि वै पुरुषा विष्णोर्यैर्यूयं ताडिता भृशम्। अत ऊर्ध्वं न गन्तव्यं यत्र वै वैष्णवाः[2] स्थिताः १५ न चित्रं ताडनं तत्र अहं मन्ये महात्मभिः। भवतां जीवनं चित्रं यच्चैर्दत्तं कृपालुभिः १६ नारायणपरं विप्रं कस्तं वीक्षितुमुत्सहेत्। युष्माभिश्च महापापै मार्कण्डेयं हरिप्रियम्। संमानेतुं कृतो यत्नः समीचीनं न तत्कृतम् १७ नरसिंहं महादेवं ये नराः पर्युपासते। तेषां पार्श्वं न गन्तव्यं युष्माभिर्मम शासनात् १८

॥ श्रीव्यास उवाच ॥

स एवं किङ्करानुक्त्वा मृत्युं च पुरतः स्थितम्। यमो निरीक्ष्य च जनं नरकस्थं प्रपीडितम् १९ कृपया परया युक्तो विष्णुभक्त्या विशेषतः। जनस्यानुग्रहार्थाय तेनोक्ताश्चागिरः शृणु २० नरके पच्यमानस्य यमेन परिभाषितम्। किं त्वया नार्चितो देवः केशवः क्लेशनाशनः २१[3]

---

१ यज्ज्ञानमार्गतः इति 'ग' पुस्तके। २ 'विष्णुज्ञान'–इति 'क ख' पुस्तकयोः। ३ इदमर्धं 'क' पुस्तके न।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

उदकेनाप्यलाभे तु द्रव्याणां पूजितः प्रभुः । यो ददाति स्वकं लोकं स त्वया किं न पूजितः २२ नरसिंहो हृषीकेशः पुण्डरीकनिभेक्षणः । स्मरणान्मुक्तिदो नृणां स त्वया किं न पूजितः २३ इत्युक्त्वा नारकान् सर्वान् पुनराह स किङ्करान् । ववस्वतो यमः साक्षाद्विष्णुभक्तिसमन्वितः २४ नारदाय स विश्वात्मा प्राहैवं विष्णुरव्ययः । अन्येभ्यो वैष्णवेभ्यश्च सिद्धेभ्यः सततं श्रुतम् २५ तद्वः प्रीत्या प्रवक्ष्यामि हरिवाक्यमनुत्तमम् । शिक्षार्थं किङ्कराः सर्वे शृणुत प्रणता हरेः २६ हे कृष्ण कृष्ण कृष्णेति यो मां स्मरति नित्यशः । जलं भित्त्वा यथा पद्मं नरकादुद्धराम्यहम् २७ पुण्डरीकाक्ष देवेश नरसिंह त्रिविक्रम । त्वामहं शरणं प्राप्त इति यस्तं समुद्धर २८ त्वां प्रपन्नोऽस्मि शरणं देवदेव जनार्दन । इति यः शरणं प्राप्तस्तं क्लेशादुद्धराम्यहम् २९

॥ व्यास उवाच ॥

इत्युदीरितमाकर्ण्य हरिवाक्यं यमेन च । नारकाः कृष्णकृष्णेति नारसिंहेति चुक्रुशुः ३० यथायथा हरेर्नाम कीर्तयन्त्यत्र नारकाः । तथातथा हरेर्भक्तिमुद्वहन्तोऽब्रुवन्निदम् ३१

॥ नारका ऊचुः ॥

ॐनमो भगवते तस्मै केशवाय महात्मने । यन्नामकीर्त्तनात्सद्यो नरकाग्निः प्रशाम्यति ३२ भक्तप्रियाय देवाय रक्षाय हरये नमः । लोकनाथाय शान्ताय यज्ञेशायादिमूर्तये ३३ अनन्तायाप्रमेयाय नरसिंहाय ते नमः । नारायणाय गुरवे शंखचक्रगदाभृते ३४ वेदप्रियाय महते विक्रमाय नमो नमः । वाराहा-

---

१ 'ज्ञानार्थमि' त्येकोऽस्मन्निव 'क' पुस्तके ।



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

याप्रतर्क्याय वेदाङ्गाय महीभृते ३५ नमो द्युतिमते नित्यं ब्राह्मणाय नमोनमः । वामनाय बहुज्ञाय वेदवेदाङ्गधारिणे २६ बलिबन्धनदत्ताय वेदपालाय ते नमः । विष्णवे सुरनाथाय व्यापिने परमात्मने ३७ चतुर्भुजाय शुद्धाय शुद्धद्रव्याय ते नमः। जामदग्न्याय रामाय दुष्टक्षत्रान्तकारिणे ३८ रामाय रावणान्ताय नमस्तुभ्यं महात्मने । अस्मानुद्धर गोविन्द पूतिगन्धान्नमोस्तु ते ३९ ॥ व्यास उवाच ॥ इति संकीर्तिते विष्णौ नारकैर्भक्तिपूर्वकम् । तदा सा नारकी पीडा गता तेषां महात्मनाम् ४० कृष्णरूपधराः सर्वे दिव्यवस्त्रविभूषिताः । दिव्यगन्धानुलिप्ताङ्गा दिव्याभरणभूषिताः ४१ तानारोप्य विमानेषु दिव्येषु हरिपूरुषाः । तर्जयित्वा यमभटान् नीतास्ते केशवालयम् ४२ नारकेषु च सर्वेषु नीतेषु हरिपूरुषैः । विष्णुलोकं यमो भूयो नमश्चक्रे तदा हरिम् ४३ यन्नामकीर्त्तनाद्याता नारकाः केशवालयम् । तं नमामि सदा देवं नरसिंहमहं गुरुम् ४४ तस्य वै नरसिंहस्य विष्णोरमिततेजसः । प्रणामं येऽपि कुर्वन्ति तेभ्योऽपीह नमोनमः ४५ दृष्ट्वा प्रशान्तं नरकाग्निमुग्रं यन्त्रादि सर्वं विपरीतमत्र । पुनः स शिक्षार्थमथात्मदूतान्यमो हि वक्तुं कृतवान्मनः स्वयम् ४६ ॥ ॥ इति नृसिंहपुराणे यमगीता नामाष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ।

॥ श्री व्यास उवाच ॥ स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले । परिहर मधुसूदनप्रपन्नान्प्रभुरहमन्यनृणां न वैष्णवानाम् १ अहममरगणार्चितेन धात्रा यम इति लोकहिताहितेन युक्तः । हरिगुरुविमुखान् प्रशास्मि मर्त्यान्

१ अयंश्लोको न विद्यते ' क ख ' पुस्तकयोः । २ अयं श्लोको न ' क ' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

हरिचरणप्रणतान्नमस्करोमि२सुगतिमभिलिषाभिर्वासुदेवादहमपि भागवते स्थितान्तरात्मा । मधुवधवशगोस्मि न स्वतन्त्रः प्रभवति संयमने ममापि कृष्णः ३ भगवति विमुखस्य नास्ति सिद्धिर्विषममृतं भवतीति नेदमस्ति । खलु वर्षशतमपीह पच्यमानं व्रजति न काञ्चनतामयः कदाचित् ४ न हि शशिकलुषच्छविः कदाचिद्विरमति नो रवितामुपैति चन्द्रः । भगवति च हरावनन्यचेता भृशमलिनोपि विराजते मनुष्यः ५ विषकणकणकभक्षणं शङ्करो भक्तिबलेन शिलषा क्षयादगस्त्यः (?) । सुरपतिरसुरैः सदाभियुक्तः पशुपतिरथ विनीतभृत्यवर्गः ६ विषधरधरकणकभक्षशङ्करोक्तिर्दशबलपञ्चशिखाक्षवादनादात् । महदपि सुविचार्य लोकतत्त्वं भगवदुपास्तिमृते न सिद्धिरस्ति ७ सुरगुरुदृढप्रसादकर्त्तारौ हरिचरणौ स्मरतापवर्गहेतोः । शुभमिदमुपलभ्य मानुषत्वं सुकृतशतेन वृथेन्द्रियार्थहेतोः ८ रमयति कुरुते न मोक्षमार्गो दहयति चन्दनमाशु भस्महेतोः । मुकुलितकरकुडमलैः सुरेन्द्रैः सततनमस्कृतपादपङ्कजो यः ९ अविहतगतये सनातनाय जगति जनिनिवारके नमोऽग्रजाय । इति घोषयति यमः पुरे स दुन्दुभीन्नमयति स दिशां सयुग्मताडितान् १० यमदूताश्च बहवश्चित्रगुप्ताद्याः यच्छ्रुत्वा जहति विष्णुभक्तान् सुदूरे । स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल शृण्वतां गणानाम् ११ परिहरमधुसूदन प्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम् । ममाष्टकमिदं पुण्यं पठते यः शृणोति वा । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति १२ इतीदमुक्तं यमवाक्यमुत्तमं मयाधुना

---

१ द्वौ श्लोकौ न विद्यते ' क ख ' पुस्तकयोः । प्रक्षिप्तौ विद्येते अग्रे अष्टक इत्युक्तत्वात् । २ ' प्रथमजगदाप्तये नमोस्त्वनन्ताय ' इति ' ग ' पुस्तके ' जगति जनिनिवारके नमोस्त्वजाय ' इति ' ख ' पुस्तके प्रकृतस्तु ' क ' पुस्तकस्थः । ३ इयं द्विरुक्तिः प्रथम पठितत्वात् न विद्यते ' ग ' पुस्तक एव ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ते हरिभक्तिवर्द्धनम् । पुनः प्रवक्ष्यामि पुरातनीं कथां भृगोस्तु पौत्रेण च या पुरा कृता १३ ॥ ॥ इति श्रीनरसिंहपुराणे नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ।

॥ श्रीव्यास उवाच ॥

जित्वैवमात्मनो मृत्युं तपसा शंसितव्रतः । स जगाम पितुर्गेहं मार्कण्डेयो महामतिः १ कृत्वा विवाहं धर्मेण भृगोर्वाक्यविशेषतः । स वेदशिरसं पुत्रमुत्पाद्य च विधानतः २ इष्ट्वा यज्ञैस्तु देवेशं नारायणमनामयम् । श्राद्धेन तु पितॄनिष्ट्वा अन्नदानेन चातिथीन् ३ प्रयागमासाद्य पुनः स्नात्वा तीर्थे गरीयसि । मार्कण्डेयो महातेजास्तेपे वटतले तपः ४ यस्यप्रसादेन पुरा जितवान् मृत्युमात्मनः । तं देवं द्रष्टुमिच्छन्यः स तेपे परमं तपः ५ वायुभक्षश्चिरं कालं तपसा शोषयंस्तनुम् । एकदा तु महातेजा मार्कण्डेयो महामतिः ६ आराध्य माधवं देवं गन्धपुष्पादिभिः शुभैः । अग्रेऽव्यग्रमनाः स्थित्वा हृदये तमनुस्मरन् ७ शंङ्खचक्रगदापाणिं तुष्टाव गरुडध्वजम् ॥

॥ मार्कण्डेय उवाच ॥

नरं नृसिंहं नरनाथमच्युतं प्रलम्बबाहुं कमलायतेक्षणम् । क्षितीश्वरैरर्चितपादपङ्कजं नमामि विष्णुं पुरुषं पुरातनम् ८
जगत्पतिं क्षीरसमुद्रमन्दिरं तं शार्ङ्गपाणिं मुनिवृन्दवन्दितम् । श्रियःपतिं श्रीधरमीशमीश्वरं नमामि गोविन्दमनन्तवर्चसम् ९
अजं वरेण्यं जनदुःखनाशनं गुरुं पुराणं पुरुषोत्तमं प्रभुम् । सहस्रसूर्यद्युतिमन्तमच्युतं नमामि भक्त्या हरिमाद्यमाधवम् १०

---

१ 'तेपे च परमं तप' इति वा पाठः 'क ख' पुस्तकयोः । २ इदमर्धं न विद्यते 'क ख पुस्तकयोः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पुरस्कृतं पुण्यव्रतां परां गतिं क्षितीश्वरं लोकपतिं प्रजापतिम् । परम्पराणामपि कारणं हरिं नमामि लोकत्रयकर्मसाक्षिणम् ११ भोगे त्वनन्तस्य पयो दधौ सुरः पुरा हि शेते भगवाननादिकृत् । क्षीरोदवीचीकणिकाम्बुनोक्षितं तं श्रीनिवासं प्रणतोऽस्मि केशवम् १२ यो नारसिंहं[२] वपुरास्थितो महान्सुरो मुरारिर्मधुकैटभान्तकृत् । समस्तलोकार्तिहरं हिरण्यकं नमामि विष्णुं सततं नमामि तम् १३ अनन्तमव्यक्तमतीन्द्रियं विभुं स्वेस्वे हि रूपे स्वयमेव संस्थितम् । योगेश्वरैरेव सदानमस्कृतं नमामि भक्त्या सततं जनार्दनम् १४ आनन्दमेकं विरजं विदात्मकं वृन्दालयं योगिभिरेव पूजितम् । अणोरणीयांसमवृद्धिमक्षयं नमामि भक्तप्रियमीश्वरं हरिम् १५

॥ श्रीव्यास उवाच ॥

इति स्तोत्रावसाने तं वागुवाचाशरीरिणी । मार्कण्डेयं महाभागं तीर्थंनु तपसि स्थितम् १६ किमर्थं क्लिश्यते ब्रह्मंस्त्वया यो नैव दृश्यते । माधवः सर्वतीर्थेषु यावन्न स्नानमाचरेः १७ इत्युक्तः सर्वतीर्थेषु तमानीय महामतिः । कृत्वा कृत्वा सर्वतीर्थे स्नानं चैव कृतं भवेत् १८ तद्वद त्वं मम प्रीत्या योऽसि सोऽसि नमोस्तु ते ।

॥ वागुवाच ॥

स्तोत्रेणानेन विप्रेन्द्र स्तुहि नारायणं प्रभुम् १९ नान्यथा सर्वतीर्थानां फलं प्राप्स्यसि सुव्रत । कृत्वा स्नानं च विधिवत्स तत्र तपसि स्थितः । आराधयामास हरिं द्रष्टुमिच्छन्महामनाः २० पुरुषोत्तमाख्यं देवेशं गत्वा तत्र महामतिः । तत्र स्नात्वा महायोगी मार्कण्डेयो महातपाः २१ तपस्तप्त्वा निराहारो द्रष्टुं नारा-

---

१ इदमेकं पद्यं न 'क ख' पुस्तकयोः । २ कृतेत्यादि पुरुषेत्यादि तपसीत्यादि पुरुषोत्तमेत्यादि चत्वारि पद्यानि न सन्ति 'ख क' पुस्तकयोः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यणं हरिम् । बहवोऽहर्गणास्तत्र गृणन्ब्रह्म सनातनम् २२ पुरुषोत्तमं समभ्यर्च्य गन्धपुष्पादिभिः क्रमात् । तुष्टाव वाग्भिरिष्टाभिर्विष्णुं तत्रोर्ध्वबाहुकः २३

॥ मार्कण्डेय उवाच ॥

तदेवाख्याहि भगवन् स्तोत्रं तीर्थफलप्रदम् ।
येन जप्तेन सकलं तीर्थस्नानफलं लभेत् ॥ २४ ॥

॥ वायुवाच ॥

जय जय देवदेव जय माधव केशव । जय पद्मपलाशाक्ष जय गोविन्द गोपते २५ जय जय पद्मनाभ जय वैकुण्ठ वामन । जय पद्म हृषीकेश जय दामोदराच्युत २६ जय पद्मेश्वरानन्त जय लोकगुरो जय । जय शंखगदापाणे जय भूधरसूकर[1] २७ जय यज्ञेश वाराह जय भूधर भूमिप । जय योगेश योगज्ञ जय योगप्रवर्त्तक २८ जय योगप्रवर्त्तक जय धर्मप्रवर्त्तक । कृतप्रिय जय जय यज्ञेश यज्ञाङ्ग जय २९ जय वन्दित सद्द्विज जय नारदसिद्धिद । जय पुण्यवतां गेह जय वैदिक भाजन ३० जय जय चतुर्भुज श्रीजयदेव जय दैत्यभयावह । जय सर्वज्ञ सर्वात्मन् जय शङ्कर शाश्वत ३१ जय विष्णो महादेव जय नित्यमधोक्षज । प्रसादं कुरु देवेश दर्शयाद्य स्वकां तनुम् ३२

॥ व्यास उवाच ॥

इत्येवं कीर्तिते तेन मार्कण्डेयेन धीमता । प्रादुर्बभूव भगवान् पीतवासा जनार्दनः ३३ शंखचक्रगदापाणिः सर्वाभरणभूषितः । तेजसा द्योतयन्सर्वा दिशो विष्णुः सनातनः ३४ तं दृष्ट्वा सहसा

१ ' जय भूधर शङ्कर ' इति ' क ' पुस्तके । २ इदमेकं नास्ति पद्यं ' क ख ' पुस्तकयोः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

भूमौ चिरप्रार्थितदर्शनम् । प्रयातः शिरसा वश्यो भक्त्या स भृगुनन्दनः ३५ निपत्योत्पत्य च पुनःपुनः साङ्गं महामनाः । प्रबद्धसम्पुटकरो गोविन्दं पुरतः स्तुवन् ३६

॥ मार्कण्डेय उवाच ॥

नमोस्तु ते देवदेव महाचित्त महाकाय महाप्राज्ञ महादेव महाकीर्त्ते ब्रह्मेन्द्र ३७ चन्द्ररुद्रार्चितपादयुगल श्रीपद्महस्त संमर्दितदैत्यदेह ३८ अनन्तभोगशयनार्पितसर्वाङ्ग सनकसनन्दनसनत्कुमाराद्यैर्योगिभिर्नासाग्रन्यस्तलोचनैरनवरतमभिचिन्तित मोक्षतत्व गन्धर्वविद्याधरयक्षकिंनरकिम्पुरुषैरहरहोगीयमानदिव्ययशः ३९ नृसिंह नारायण पद्मनाभ गोविन्द गोवर्द्धनगुहानिवास योगीश्वर देवेश्वर जलेश्वर महेश्वर ४० योगधर महामायाधर विद्याधर यशोधर कीर्तिधर त्रिगुणनिवास त्रितत्वधर त्रेताग्निधर ४१ त्रिवेदभाक्[1] त्रिनिकेत त्रिसुपर्ण त्रिदण्डधर ४२ स्निग्धमेघाभार्चितद्युतिविराजित पीताम्बरधर किरीटकटककेयूरहारमणिरत्नांशुदीप्तिविद्योतितसर्वदिश ४३ कनकमणिकुण्डलमण्डितगण्डस्थल मधुसूदन विश्वमूर्ते ४४ लोकनाथ यज्ञेश्वर यज्ञप्रिय तेजोमय भक्तिप्रिय वासुदेव दुरितापहाराराध्य पुरुषोत्तम नमोस्तु ते ४५

॥ व्यास उवाच ॥

इत्युदीरितमाकर्ण्य भगवांस्तु जनार्दनः ।
देवदेवः प्रसन्नात्मा मार्कण्डेयमुवाच ह ४६

॥ श्रीभगवानुवाच ॥

तुष्टोस्मि भवतो वत्स तपसा महता पुनः ॥

---

१ किन्नरोति न 'ख ग' पुस्तकयोः । २ 'त्रिवेदभागि' ति न विद्यते 'ख ग पुस्तकयोः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्तोत्रैरपि महाबुद्धे नष्टपापोसि साम्प्रतम् ४७
वरं वरय विप्रेन्द्र वरदोहं तवाग्रतः ॥
नातप्ततपसा ब्रह्मन् द्रष्टुं साध्योहमंजसा ४८

॥ मार्कण्डेय उवाच ॥

कृतकृत्योस्मि देवेश साम्प्रतं तव दर्शनात् ॥
त्वद्भक्तिमचलामेकां मम देहि जगत्पते ४९
यदि प्रसन्नो भगवान् मम माधव श्रीपते ॥
चिरायुष्यं हृषीकेश येन त्वां चिरमर्चये ५०

॥ श्रीभगवानुवाच ॥

मृत्युस्ते निर्जितः पूर्वं चिरायुस्त्वं च लब्धवान् ॥
भक्तिरस्त्वचला ते मे वैष्णवी मुक्तिदायिनी ५१
इदं तीर्थं महाभाग त्वन्नाम्ना ख्यातिमेष्यति ॥
पुनस्त्वं द्रक्ष्यसे मां वै क्षीराब्धौ योगशायिनम् ५२

॥ व्यास उवाच ॥

इत्युक्त्वा पुण्डरीकाक्षस्तत्रैवान्तरधीयत । मार्कण्डेयोपि धर्मात्मा चिन्तयन्मधुसूदनम् ५३ अर्चयन् देवदेवेशं जपन् शुद्धं नमन्नपि । वेदशास्त्राणि पुण्यानि पुराणान्यखिलानि यः ५४ मुनीनां श्रावयामास गाथाश्चैव तपोधनः । इतिहासानि पुण्यानि पितृतत्त्वं च सत्तमः ५५ ततः कदाचित्पुरुषोत्तमोक्तं वचः स्मरन् शास्त्रविदां वरिष्ठः । भ्रमन् समुद्रं स जगाम द्रष्टुं हरिं सुरेशं

---

१ 'भगवन्नि' ति सम्बोधनं 'ग' पुस्तके । २ 'चिरमर्चितः' इति 'ग' पुस्तके पाठो विद्यते । ३ 'चिरायुस्त्वं ततो भवानि' ति 'ख' पुस्तके । ४ 'पुनश्च द्रक्ष्यसे त्वं मा' मिति 'ग' पुस्तके पाठः । ५ 'नमन्नृषि' रिति 'क' पुस्तके । ६ 'खिलानि चे' ति 'ग' पुस्तके । ७ 'सत्तम' मिति 'ग' पुस्तके पाठान्तरम् । ८ 'वेदविदा' मिति 'ग' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मुनिरुग्रतेजाः ५६ श्रमेण युक्तश्चिरकालसंभ्रमाद्भृगोः सुपुत्रो हरिभक्तिमुद्वहन् । क्षीराब्धिमासाद्य हरिं सुरेशं नागेन्द्रभोगे कृतनिद्रमैक्षत ५७ ॥ ॥ इति श्रीनरसिंहपुराणे मार्कण्डेयचरित्रे दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ।

॥ व्यास उवाच ॥

प्रणिपत्य जगन्नाथं चराचरगुरुं हरिम् ।
मार्कण्डेयोभितुष्टाव भोगपर्यङ्कशायिनम् १

॥ मार्कण्डेय उवाच ॥

प्रसीद भगवन् विष्णो प्रसीद पुरुषोत्तम । प्रसीद देवदेवेश प्रसीद गरुडध्वज २ प्रसीद विष्णो लक्ष्मीश प्रसीद धरणीधर । प्रसीद लोकनाथाद्य प्रसीद परमेश्वर ३ प्रसीद सर्वदेवेश प्रसीद कमलेक्षण । प्रसीद मन्दरधर प्रसीद मधुसूदन ४ प्रसीद शुभगाकान्त प्रसीद भुवनाधिप । 'प्रसीदाद्यमहादेव प्रसीद मम केशव' ५ जय कृष्ण जयाचिन्त्य जय विष्णो जयाव्यय । जय विश्व जयाव्यक्त जय विष्णो नमोऽस्तु ते ६ जयदेव जयाजेय जय सत्य जयाक्षर । जय काल जयेशान जय सर्व नमोऽस्तु ते ७ 'जय यज्ञपते नाथ जय विश्वपते विभो । जय भूतपते नाथ जय सर्वपते विभो । ८ जय विश्वपते नाथ जय दक्ष नमोऽस्तु ते । जय पापहरानन्त जयजन्मजरापह ९ जय भद्रातिभद्रेश जय भद्र नमोऽस्तु ते ।

---

१ 'भृगोस्तु पुत्र' इति 'ग' पुस्तके । २ 'क्षीरोद' मिति 'ग' पुस्तके । ३ श्लोकोयं 'क ख' पुस्तकयोर्न विद्यते । ४ 'जयामये' ति 'ग' पुस्तके पाठः । ५ 'सत्यत्रयाक्षरे' ति 'ग' पुस्तके । ६ इतः सार्धषट्पद्यानि 'क ख' पुस्तकयोर्न ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

जय कामद काकुत्स्थ जय मानद माधव १० जय शङ्कर देवेश जय श्रीश नमोस्तु ते। जय कुङ्कुमरक्ताभ जय पङ्कज-लोचन ११ जय चन्दनलिप्ताङ्ग जय राम नमोस्तु ते । जय-देव जगन्नाथ जय देवकिनन्दन । १२। जय सर्वगुरो ज्ञेय जय शम्भो नमोस्तु ते। जय सुन्दर पद्माभ जय सुन्दरिवल्लभ । जध सुन्दर सर्वाङ्ग जय वन्द्य नमोस्तु ते[१] १३ जय सर्वद सर्वेश जय शर्मद शाश्वत। जय कामद भक्तानां प्रभविष्णो नमोऽस्तु ते१४ नमः कमलनाभाय नमः कमलमालिने। लोकनाथ नमस्तेस्तु वीरभद्र नमोस्तु ते १५ नमस्त्रैलोक्यनाथाय चतुर्मूर्ते जगत्पते । नमो देवाधिदेवाय नमो नारायणाय ते १६ नमस्ते वासुदेवाय नमस्ते पीतवाससे। नमस्ते नरसिंहाय नमस्ते शार्ङ्गधारिणे १७ नमः कृष्णाय रामाय नमश्चक्रायुधाय च। नमः शिवाय देवाय नमस्ते भुवनेश्वर १८ नमो वेदान्तवेद्याय नमोऽनन्ताय विष्णवे। नमस्ते सकलाध्यक्ष नमस्ते श्रीधराच्युत १९ लोकाध्यक्ष जगत्पूज्य परमात्मन्नमोस्तु ते। त्वं माता सर्वलोकानां त्वमेव जगतः पिता २० त्वमार्तानां सुहृन्मित्रं प्रियस्त्वं प्रपितामह। त्वं गुरुस्त्वं गतिः साक्षी त्वं पतिस्त्वं परायणः २१ त्वं ध्रुवस्त्वं वषट्कर्ता त्वं हविस्त्वं हुताशनः। त्वं शिवस्त्वं वसुधाता त्वं ब्रह्मा त्वं सुरेश्वरः २२ त्वं यमस्त्वं रविर्वायुस्त्वं जलं त्वं धनेश्वरः। त्वं मनस्त्वमहोरात्रं त्वं निशा त्वं निशाकरः त्वं धृतिस्त्वं श्रियः कान्तिस्त्वं क्षमा त्वं धराधरः २३ त्वं कर्ता जगतामीशस्त्वं हन्ता मधुसूदन। त्वमेव गोप्ता सर्वस्य जगतस्त्वं चराचर २४ करणं कारणं कर्ता त्वमेव परमेश्वरः।

---

१ 'कमलाध्यक्षे' ति वा पाठः। २ न विद्यते इदमर्धं 'ग पुस्तके। ३ त्वं गुरुमित्यादिमारभ्य महाग्रहैरित्यन्तं सार्धषट्चत्वारिंशश्लोका न 'क ख' पुस्तकयोः।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

शंखचक्रगदापाणे भो समुद्धर माधव २५ प्रिय पद्मपलाशाक्ष शेषपर्यङ्कशायिने । त्वमेव भक्त्या सततं नमामि पुरुषोत्तम २६ श्रीवत्साङ्कं जगद्बीजं श्यामलं कमलेक्षणम् । नमामि ते वपुर्देव कलिकल्मषनाशनम् २७ लक्ष्मीधरमुदाराङ्गं दिव्यमालाविभूषितम् । चारुपृष्ठं महाबाहुं चारुभूषणभूषितम् २८ पद्मनाभं विशालाक्षं पद्मपत्रनिभेक्षणम् । दीर्घतुंगमहाघ्राणं नीलजीमूतसन्निभम् २९ दीर्घबाहुं सुगुप्ताङ्गं रत्नहारोज्ज्वलोरसम् । सुभ्रूं ललाटमुकुटं स्निग्धदंतं सुलोचनम् ३० चारुबाहुं सुताम्रोष्ठं रत्नोज्ज्वलितकुण्डलम् । वृत्तकण्ठं सुपीनांसं सरसं श्रीधरं हरिम् ६१ सुकुमारमजं नित्यं नीलकुञ्चितमूर्धजम् । उन्नतांसं महोरस्कं कर्णान्तायतलोचनम् ३२ हेमारविन्दवदनमिन्दिरायनमीश्वरं । सर्वलोकविधातारम् सर्वपापहरं हरिम् ३३ सर्वलक्षणसम्पन्नं सर्वसत्त्वमनोरमम् । विष्णुमच्युतमीशानमनन्तं पुरुषोत्तमम् ३४ नतोस्मि मनसा नित्यं नारायणमनामयम् । वरदं कामदं कान्तमनन्तं सूनृतं शिवम् ३५ नमामि शिरसा विष्णो सदा त्वां भक्तवत्सल । अस्मिन्नेकार्णवे घोरे वायुस्कभितचञ्चले ३५ अनन्तभोगशयने सहस्रफणशोभिते । विचित्रशयने रम्ये सेविते मन्दवायुना ३७ भुजपंजरसंसक्तकमलालयसेवितम् । इह त्वां मनसा सर्वमिदानीं दृष्टवानहम् ३८ इदानीं तु सुदुःखार्तो मायया तव मोहितः । एकोदके निरालम्बे नष्टस्थावरजङ्गमे ३९ शून्ये तमसि दुःपारे दुःखपङ्के निरामये । शीतातपजरारोगशोकतृष्णादिभिः सदा ४० पीडितोऽस्मि भृशं तात सुचिरं कालमच्युत । शोकमोहग्रहग्रस्तो विचरन् भवसागरे ४१ इहाद्य विधिना प्राप्तस्तव पादाब्जसन्निधौ । एकार्णवे महाघोरे दुस्तरे दुःखपीडितः ४२ चिरभ्रमपरिश्रान्तस्त्वामद्य शरणं गतः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

प्रसीद सुमहामाय विष्णो राजीवलोचन ४३ विश्वयोने विशालाक्ष विश्वात्मन्विश्वसम्भव । अनन्यशरणं मामतोत्र कुलनन्दन ४४ त्राहि मां कृपया कृष्ण शरणागतमातुरम् । नमस्ते पुण्डरीकाक्ष पुराणपुरुषोत्तम ४५ अंजनाभ हृषीकेश मायामय नमोस्तुते । मामुद्धर महाबाहो मग्नं संसारसागरे ४६ गह्वरे दुस्तरे दुःखक्लिष्टे क्लेशमहाग्रहैः । अनाथं कृपणं दीनं पतितं भवसागरे । मां समुद्धर गोविन्द वरदेश नमोस्तु ते ४७ नमस्त्रैलोक्यनाथाय हरये भूधराय च । देवदेव नमस्तेस्तु श्रीवल्लभ नमोस्तु ते ४८ कृष्ण कृष्ण कृपालुस्त्वमगतीनां गतिर्भवान् । संसारार्णवमग्नानां प्रसीद मधुसूदन ४९ त्वामेकमाद्यं पुरुषं पुराणं जगत्पतिं कारणमच्युतं प्रभुम् । जनार्दनं जन्मजरार्तिनाशनं सुरेश्वरं सुन्दरमिन्दिरापतिम् ५० बृहद्भुजं श्यामलकोमलं शुभं वराननं वारिजपत्रनेत्रम् । तरङ्गभङ्गायतकुन्तलं हरिं सुकान्तमीशं प्रणतोस्मि शाश्वतम् ५१ सा जिह्वा या हरिं स्तौति तच्चित्तं यत्तदर्पितम् । तावेव केवलौ श्लाघ्यौ यौ त्वत्पूजाकरौ करौ ५२ जन्मान्तरसहस्रेषु यन्मया पातकं कृतम् । तन्मे हर त्वं गोविन्द वासुदेवेतिकीर्तनात् ५३

॥ व्यास उवाच ॥

इति स्तुतस्ततो विष्णुर्मार्कण्डेयेन धीमता ।
सन्तुष्टः प्राह विश्वात्मा तं मुनिं गरुडध्वजः ५४

॥ श्री भगवानुवाच ॥

प्रीतोस्मि तपसा विप्र स्तुत्या च भृगुनन्दन ।

---

१ 'इन्दिरावर' मिति 'ग' पुस्तके । २ भृङ्गायतकुन्तल' मिति 'ग' पुस्तके । ३ 'यत्त्वदार्पित' मिति 'क ख' पुस्तकयोः । ४ 'त्राहिमांपुरुषोत्तमे' ति 'ग' पुस्तके । ५ अत्रैकादशाध्यायसमाप्तिः 'ग' पुस्तके । ६ उत्थाय प्राह इति 'ग' पुस्तके । ७ 'ब्रम्हन्' इति 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वरं वृणीष्व भद्रं ते प्रार्थितं दद्मि ते वरम् ५५

॥ मार्कण्डेय उवाच ॥

त्वत्पादपद्मे देवेश भक्तिं मे देहि सर्वदा । यदि तुष्टो ममाद्य त्वमन्यदेकं[1] वृणोम्यहम् ५६ स्तोत्रेणानेन देवेश यस्त्वां स्तोष्यति नित्यशः । स्वर्लोकवसतिं[2] तस्य देहि देव जगत्पते ॥ ५७ ॥ दीर्घायुष्ट्वं तु यद्दत्तं त्वया मे तप्यतः पुरा । तत्सर्वं सफलं ज्ञात[3]मिदानीं तव दर्शनात् ५८ वस्तुमिच्छामि देवेश तव पादाब्जमर्चयन्[4] । अत्रैव भगवन्नित्यं जन्ममृत्युविवर्जितः ५९

॥ श्रीभगवानुवाच ॥

मय्यस्तु ते भृगुश्रेष्ठ भक्तिरव्यभिचारिणी ।
भक्त्या मुक्तिर्भवत्येव तव कालेन सत्तम ६०
यस्त्विदं पठते स्तोत्रं सायं प्रातस्त्वयेरितम् ।
मयि भक्तिं दृढां कृत्वा मम लोके स मोदते ६१
यत्र यत्र भृगुश्रेष्ठ स्थितस्त्वं मां स्मरिष्यसि ।
तत्र तत्र समेष्यामि दान्तो भक्तवशोस्मि भोः ६२

॥ व्यास उवाच ॥

इत्युक्त्वा तं मुनिश्रेष्ठं मार्कण्डेयं स माधवः । विरराम स सर्वत्र पश्यन्विष्णुं यतः स्थितम्[5] ६३ इति ते कथितं विप्र चरितं तस्य धीमतः । मार्कण्डेयस्य च मुनेस्तेनैवोक्तं पुरा मम ६४ ये विष्णुभक्त्या चरितं पुराणं भृगोस्तु पौत्रस्य पठन्ति नित्यम् । ते

---

। १ 'अन्यदेव वृणोम्यह' मिति 'ग' पुस्तके पाठः । २ 'स्वर्लोक वसतिं' 'ग' पुस्तके । ३ 'याति' इति 'ग' पुस्तके । ४ 'दर्शयन्नां समर्चय' इति 'ग' पुस्तके । ५ 'यतस्तत' इति 'ख' पुस्तके ।



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मुक्तपापा नरसिंहलोके वसन्ति भक्तैरभिपूज्यमानाः[1] ६९ । इति श्रीनरसिंहपुराणे मार्कण्डेयचरितं नाम द्वादशोऽध्यायः १२

# त्रयोदशोऽध्यायः ।

॥ सूत उवाच ॥

श्रुत्वेमाममृतां पुण्यां सर्वपापप्रणाशिनीम् ।
अवितृप्तः स धर्मात्मा शुको व्यासमभाषत १

॥ श्रीशुक उवाच ॥

अहोतीव तपश्चर्या मार्कण्डेयस्य धीमतः ।
येन दृष्टो हरिः साक्षाद्येन मृत्युः पराजितः २
न तृप्तिरस्ति मे तात श्रुत्वेमां वैष्णवीं कथाम् ।
पुण्यां[2] पापहरां तात तस्मादन्यत्तु मे वद ३
नराणां दृढचित्तानामकार्यं नेह कुर्वताम् ।
यत्पुण्यमृषिभिः प्रोक्तं तन्मे वद महामते ४

॥ व्यास उवाच ॥

नराणां दृढचित्तानामिह लोके परत्र च । पुण्यं यत्स्यान्मुनिश्रेष्ठ तन्मे निगदतः शृणु ५ अत्रैवोदाहरन्तीममितिहासं पुरातनम् । यम्यां[3] च सह संवादं यमस्य च महात्मनः ६ विवस्वानदितेः पुत्रस्तस्य पुत्रौ सुवर्चसौ । जज्ञाते स यमश्चैव यमी चापि यवीयसी ७ तौ तत्र संविवर्द्धेते पितुर्भवन उत्तमे । क्रीडमानौस्व भावेन स्वच्छन्दगमनावुभौ ८ यमी यमं समासाद्य स्वसा भ्रातरमब्रवीत् ।

---

१ 'भक्तैरपि पूज्यमाना' इति 'ग' पुस्तके पाठः । २ 'पुण्यं पापहरं तातस्यादन्यद्यत्तु मे वद' इति 'ग' पुस्तके पाठः । ३ 'स्वस्त्रा' इति 'ख' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ यम्युवाच ॥

न भ्राता भगिनीं योग्यां कामयन्तीं च कामयेत् ९ भ्रातृभूतेन किं तस्य स्वसुर्यो न पतिर्भवेत् । अभूत इव स ज्ञेयो ननु भूतः कथंचन १० अनाथां नाथमिच्छन्तीं स्वसारं यो न नाथति । काङ्क्षन्ती भ्रातरं नाथं भर्तारं यस्तु नेच्छति ११ भ्रातेति नोच्यते लोके स पुमान् मुनिसत्तमः । स्याद्वान्यतनया[1] तस्य भार्या भवति किं तया १२ इच्छतस्तु स्वसा भ्रातुः कामेन परिदह्यते । यत्कार्यमहमिच्छामि त्वमेवेच्छ तदेव हि ॥ १३ अन्यथाहं मरिष्यामि त्वामिच्छन्ती विचेतना । कामदुःखमसह्यं नु भ्रातः किं त्वं न चेच्छसि १४ कामाग्निना भृशं तप्ता मलयांम्यङ्ग[2] मा चिरम् । कामार्तायाः स्त्रियाः कान्त वशगो भव मा चिरम् १५ स्वेन कायेन मे कायं संयोजयितुमर्हसि ।

॥ यम उवाच ॥

किमिदं लोकविद्विष्टं धर्मं भगिनि भाषसे १६
अकार्यमिह कः कुर्यात्पुमान् भद्रे सुचेतनः ।
न ते संयोजयिष्यामि कायं कायेन भामिनि १७
न भ्राता मदनार्तायाः स्वसुः कामं प्रयच्छति ।
महापातकमित्याहुः स्वसारं योधिगच्छति । १८
पशूनामेष धर्मः स्यात्तिर्यग्योनिवतां शुभे ।

॥ यम्युवाच ॥

एकस्थाने[3] यथापूर्वं संयोगो नौ न दुष्यति १९
मातृगर्भे तथैवायं संयोगो नौ न दुष्यति ।

---

१ स्यादित्ययं श्लोको न 'क' पुस्तके । २ 'भज मामनुजां चिर' मिति 'ग' पुस्तके पाठः । ३ 'एकभ्रूणे' इति 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

किं भ्रातरप्यनाथां त्वं मम नेच्छसि शोभनम् २०
स्वसारं निर्ऋतिं रक्षो संगच्छति च नित्यशः ।

॥ यम उवाच ॥

स्वयंभुवाप्यनिन्द्येतल्लोकवृत्तं जुगुप्सितम् २१ प्रधानपुरुषाचीर्णं लोकोयमनुवर्तते। तस्मादनिन्दितं धर्मं प्रधानपुरुषश्चरेत् २२ निन्दितं वर्जयेद्यत्नात् एतद्धर्मस्य लक्षणम् । यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः २३ स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते । अतिपापमहं मन्ये सुभगे वचनं तव २४ विरुद्धं सर्वधर्मेषु लोकेषु च विशेषतः । मत्तोन्यो यो भवेद्यो वै विशिष्टो रूपशीलतः २५ तेन सार्धं प्रमोदस्व न ते भर्ता भवाम्यहम् । नाहं स्पृशामि तन्वा ते तनुं भद्रे दृढव्रतः २६ मुनयः पापमाहुस्तं यः स्वसारं निगृह्णति ।

॥ यम्युवाच ॥

दुर्लभं चैव पश्यामि लोके रूपमिहेदृशम् । यत्र रूपं वयश्चैव पृथिव्यां क्व प्रतिष्ठितम् २७ न विजानामि ते चित्तं कुत एतत्प्रतिष्ठितम् । आत्मरूपगुणोपेतां न कामयसि मोहिताम् २८ हृदयं न विजानामि स्याद्वै केन निवेदितम् । अन्या वा करिणा हस्तिकक्षेव तनुमध्यमा २९ लतेव पादपे मग्ना कामं त्वच्छरणंगता । बाहुभ्यां संपरिष्वज्य निवसामि शुचिस्मिता ३०

---

१ 'स्वयंभुवाप्यनिन्द्येत लोकवृत्तम् निन्दितः' इति 'स' पु. । २ 'प्रधानपुरुषेश्वरात्' इति 'ग' पुस्तके पाठः । ३ 'न वै भ्राता पतिर्भवेत्' इति 'ग' पुस्तके पाठः । ४ 'आत्मरूपगुणोपेतं न कामयसि भो हितम्' इति 'ग' पुस्तके पाठः । ५ हृदयमित्यादिश्लोकद्वयं 'क ख' पुस्तकयोः 'न' विद्यते ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ यम उवाच ॥

अन्यं श्रयस्व सुश्रोणि देवं देव्यसितेक्षणे । मत्तदन्तीव ह-स्तिन्याः परिष्वङ्गं करिष्यति ३१ यस्तु ते काममोहेन चेतसा विभ्रमं गतः । तस्य देवस्य देवी त्वं भवेथा वरवर्णिनि ३२ ईप्सितां सर्वभूतानां वर्यां शंसन्ति मानवाः । सुभद्रां चारुसर्वाङ्गीं संस्कृतां परिचक्षते ३३ तत्कृतेपि सुविद्वांसो न करिष्यन्ति दूषणम् । परितापं महाप्राज्ञे न करिष्ये दृढव्रतः ३४ चित्तं मे निर्मलं भद्रे विष्णौ रुद्रे च संस्थितम् । अतः पापं नु नेच्छामि धर्मचित्तो दृढव्रतः ३५

॥ व्यास उवाच ॥

असकृत्प्रोच्यमानोपि तया चैवं दृढव्रतः । कृतवान्न यमः का-र्यं तेन देवत्वमाप्तवान् ३६ नराणां दृढचित्तानामेवं पापमकुर्व-ताम् । अनन्तं फलमित्याहुस्तेषां स्वर्गफलं भवेत् ३७ एतत्तु यम्युपाख्यानं पूर्ववृत्तं सनातनम् । सर्वपापहरं पुण्यं श्रोतव्यम-नसूयया ३८ यश्चैतत्पठते नित्यं हव्यकव्येषु ब्राह्मणः । संतृप्ताः पितरस्तस्य न विशन्ति यमालयम् ३९ यश्चैतत्पठते नित्यं पितॄणामनृणो भवेत् । वैवस्वतीभ्यस्तीव्राभ्यो यातनाभ्यः प्रमुच्यते ४० पुत्रैतदाख्यानमनुत्तमं मया तवोदितं वेदपदार्थ-निश्चितम् । पुरातनं पापहरं सदा नृणां किमन्यदद्यैव वदामि शंस मे ४१ इति श्रीनरसिंहपुराणे यमीयमसंवादोनाम त्रयो-दशोऽध्यायः १३

## चतुर्दशोऽध्यायः ।

॥ श्रीशुक उवाच ॥

विचित्रेयं कथा तात वैदिकी मे त्वयेरिता । अन्याः पुण्याश्च मे ब्रूहि कथाः पापप्रणाशनीः १

१ मत्तदन्तीत्यादिसार्धत्रयःश्लोकाः न 'क ख' पुस्तकयोः २ सर्व-वृत्तामिति 'वा' पाठः 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ व्यास उवाच ॥

अहं ते कथयिष्यामि पुरावृत्तमनुत्तमम् । पतिव्रतायाः संवादं कस्यचिद्ब्रह्मचारिणः २ कश्यपो नीतिमान्नाम ब्राह्मणो वेदपारगः । सर्वशास्त्रार्थतत्त्वज्ञो व्याख्याने परिनिष्ठितः ३ स्वधर्मकार्यनिरतः परधर्मपराङ्मुखः । ऋतुकालाभिगामी च अग्निहोत्रपरायणः ४ सायंप्रातर्महाभाग हुत्वाग्निं तर्पयन्द्विजान् । अतिथीनागतान् गेहं[3] नरसिंहं च पूजयन् ५ तस्य पत्नी महाभागा सावित्री नाम नामतः । पतिव्रताः महाभागा पत्युः प्रियहिते रता ६ भर्त्तुः शुश्रूषणेनैव दीर्घकालमनिन्दिता । परोक्षज्ञानमापन्ना[4] कल्याणी गुणसम्मता ७ तया सह स धर्मात्मा मध्यदेशे महामतिः । नन्दिग्रामे वसन् धीमान् स्वानुष्ठानपरायणः ८ अथ कौशलिको विप्रो यज्ञशर्मा[5] महामतिः । तस्य भार्याभवत्साध्वी रोहिणी नाम नामतः ९ सर्वलक्षणसम्पन्ना पतिशुश्रूषणे रता । सा प्रसूता सुतं त्वेकं तस्माद्भर्त्तुरनिन्दिता । स यायावरवृत्तिस्तु पुत्रे जाते विचक्षणः १० जातकर्म तदा चक्रे स्नात्वा पुत्रस्य मन्त्रतः । द्वादशेहनि तस्यैव देवशर्मेति बुद्धिमान् १२ पुण्याहं वाचयित्वा तु नाम चक्रे यथाविधि । उपनिष्क्रमणं चैव चतुर्थे मासि यत्नतः । तथान्नप्राशनं षष्ठे मासि चक्रे यथाविधि १३ संवत्सरे ततः पूर्णे चूडाकर्म च धर्मवित् । कृत्वा गर्भाष्टमे वर्षे व्रतबन्धं चकार सः १४ सोपनीतो यथान्यायं पित्रा वेदमधीतवान् । स्वीकृते त्वेकवेदे तु पिता स्वर्लोकमास्थितः १५ मात्रा सह स दुःखित्वा पितर्युपरते सुतः । धैर्यमास्थाय मेधावी साधुभिः प्रेरितः पुनः १६ प्रेतकार्याणि कृत्वा

---

१ 'स्वकर्मकार्ये' ति 'ग' पुस्तके । २ 'ऋतुकालागमो भार्यामि' ति 'ग' पुस्तके । ३ 'गेही' त्यपि पाठः 'ख' पुस्तके । ४ '–ज्ञानसंपन्ना' इति 'ग' पुस्तके । ५ यज्ञकर्मा' 'ग' पुस्तके । ६ 'पितुर्वेद' मिति वा पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तु देवशर्मा गतः सुतः । गङ्गादिषु सुतीर्थेषु स्नानं कृत्वा यथाविधि १७ तमेव प्राप्तवान् ग्रामं यत्रास्ते सा पतिव्रता । संप्राप्य विश्रुतः सोथ ब्रह्मचारी महामते १८ भिक्षाटनं तु कृत्वासौ जपन्वेदमतन्द्रितः । कुर्वन्नेवाग्निकार्यं तु नन्दिग्रामे च तस्थिवान् १९ मृते भर्तरि तन्माता पुत्रे प्रव्रजिते तु सा । दुःखाद्दुःखमनुप्राप्ता नियतं रक्षकं विना २० अथ स्नात्वा तु नद्यां वै ब्रह्मचारी स्वकर्पटम् । क्षितौ प्रसार्य शोषार्थं जपन्नासीत वाग्यतः २१ काको बलाका तद्वस्त्रं परिगृह्याशु जग्मतुः । तौ दृष्ट्वा भर्त्सयामास देवशर्म्मा ततो द्विजः २२ विष्ठामुत्सृज्य वस्त्रे तु जग्मतुस्तस्य भर्त्सनात् । रोषेण वीक्षयामास खे यान्तौ पक्षिणौ तु सः । तद्रोषवह्निना दग्धौ भूम्यां निपतितौ खगौ । स दृष्ट्वा तौ क्षितिं यातौ पक्षिणौ विस्मयं गतः २३ तपसा न मया कश्चित् सदृशोऽस्ति महीतले । इति मत्वा गतो भिक्षामटितुं ग्राममंजसा २४ अटन् ब्राह्मणगेहेषु ब्रह्मचारी तपःस्मयी । प्रविष्टस्तद्गृहं वत्स गृहे यत्र पतिव्रता २५ तं दृष्ट्वा याच्यमानापि तेन भिक्षां पतिव्रता । वाग्यता पूर्वं विज्ञाय भर्त्तुः कृत्वानुशासनम् २६ क्षालयामास तत्पादौ भूय उष्णेन वारिणा । आश्वास्य स्वपतिं सा तु भिक्षां दातुं प्रचक्रमे २७ ततः क्रोधेन रक्ताक्षो ब्रह्मचारी पतिव्रताम् । दग्धुकामस्तपोवीर्यात्पुनः पुनरुदैक्षत । सावित्री तु निरीक्ष्यैवं हसन्ती सा तमब्रवीत् २८ न काको न बलाकाहं त्वत्क्रोधेन तु यौ मृतौ । नदीतीरेद्य कोपात्मन् भिक्षां मत्तो यदीच्छसि २९ तयैवमुक्तः सावित्र्या भिक्षामादाय सोग्रतः । चिन्तयन्मनसा तस्याः शक्तिं दूरार्थवेदिनीम् ३० एत्याश्रमे मठे स्थाप्य भिक्षापात्रं प्रयत्नतः । पतिव्रतायां भुक्तायां गृहस्थे निर्गते पतौ ३१ पुनरागम्य तद्गेहं तामुवाच पतिव्रताम् ।

---

१ 'कुर्वन्व्रताग्नि–' इति 'ग' पुस्तके पाठः । २ 'क्षितावासीत्स वाग्यतः' इति 'ग' पुस्तके 'क' पुस्तके च । ३ इदमर्धं 'क ख' पुस्तकयोर्न ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ ब्रह्मचार्युवाच ॥

प्रब्रूह्येतन्महाभागे पृच्छतो मे यथार्थतः ३२ विप्रकृष्टार्थविज्ञानं कथमाशु तवाभवत्। इत्युक्ता तेन सा साध्वी सावित्री तु पतिव्रता ३३ तं ब्रह्मचारिणं प्राह पृच्छन्तं गृहमेत्य वै। शृणुष्वावहितो ब्रह्मन् यन्मां त्वं परिपृच्छसि ३४ तत्तेऽहं संप्रवक्ष्यामि स्वधर्म्मपरिबृंहितम्। स्त्रीणां तु पतिशुश्रूषा धर्म्म[1] एष परिस्थितः ३५ तमेवाहं सदा कुर्यां नान्यमस्मि महामते। दिवारात्रमसन्दिग्धं श्रद्धया परितोषणम् ३६ कुर्वन्त्या मम सम्भूतं विप्रकृष्टार्थदर्शनम्। अन्यच्च ते प्रवक्ष्यामि निबोध त्वं यदीच्छसि ३७ पिता यायावरः शुद्धस्तस्माद्वेदमधीत्य वै। मृते पितरि कृत्वा तु प्रेतकार्यमिहागतः ३८ उत्सृज्य मातरं द्रष्टुं वृद्धां दीनां तपस्विनीम्। अनाथां विधवामत्र नित्यं स्वोदरपोषकः ३९ यया गर्भे धृतः पूर्वं पालितो लालितस्तथा। तां त्यक्त्वा विपिने धर्मं चरन् विप्र न लज्जसे ४० यया तव कृतं ब्रह्मन् बाल्ये मलनिकृन्तनम्। दुःखितां तां गृहे त्यक्त्वा किं भवेद्विपिनेऽटतः ४१ मातृदुःखेन ते वक्त्रं पूतिगन्धमिदं भवेत्। पित्रैव संस्कृतो यस्मात् तस्मात्छक्तिरभूदियम् ४२ पक्षी दग्धः सुदुर्बुद्धे पापात्मन् साम्प्रतं वृथा। वृथा स्नानं वृथा तीर्थं वृथा जप्तं वृथा हुतम् ४३ स जीवति वृथा ब्रह्मन् यस्य माता सुदुःखिता। यो रक्षेत्सततं भक्त्या मातरं मातृवत्सलः ४४ तस्येहानुष्ठितं सर्वं फलं चामुत्र चेह हि। मातुश्च वचनं ब्रह्मन् पालितं यैर्नरोत्तमैः ४५ ते मान्यास्ते नमस्कार्या इह लोके परत्र च। अतस्त्वं तत्र गत्वाद्य यत्र माता व्यवस्थिता ४६ तां त्वं रक्षय जीवन्तीं तद्रक्षा ते परं तपः। क्रोधं परित्यजैनं त्वं दृष्टादृष्टविघातकम् ४७ तयोः कुरु

---

[1] धर्म एषा परा स्थितिः। इति 'ग'- पुस्तके। २ 'यये' त्यादि श्लोकद्वयं 'क ग' पुस्तकयोर्न।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वधे शुद्धिं पक्षिणोरात्मशुद्धये । याथातथ्येन कथितमेतत्सर्वं मया तव ४८ ब्रह्मचारिन् कुरुष्व त्वं यदीच्छसि सतां गतिम् । इत्युक्त्वा विरराम।थ द्विजपुत्रं पतिव्रता ४९ सोपि तामाह भूयोपि सावित्रीं तु क्षमापयन् । अज्ञानात्कृतपापस्य क्षमत्वं वरवर्णिनि ५० मया तवाहितं यच्च कृतं क्रोधनिरीक्षणम् । तत्क्षमस्व महाभागे हितमुक्तं पतिव्रते ५१ तत्र गत्वा मया यानि कर्माणि तु शुभव्रते । कार्याणि तानि मे ब्रूहि यथा मे सुगतिर्भवेत् ५२ तेनैवमुक्ता साप्याह तं पृच्छन्तं पतिव्रता । यानि कार्याणि वक्ष्यामि त्वया कर्माणि मे शृणु ५३ पोष्या माता त्वया तत्र निश्चयं भैक्षवृत्तिना । अत्र वा तत्र वा ब्रह्मन् प्रायश्चित्तं च पक्षिणोः ५४ यज्ञशर्म्मसुता कन्या भार्या तव भविष्यति । तां गृहीष्व च धर्मेण गते त्वयि स दास्यति ५५ पुत्रस्ते भविता तस्यामेकः संततिवर्धनः यायावरधनाद्वृत्तिः पितृवत्ते भविष्यति ५६ पुनर्मृतायां भार्यायां भविता त्वं त्रिदण्डकः । सं यत्याश्रमधर्मेण यथोक्तयानुष्ठितेन च । नरसिंहप्रसादेन वैष्णवं पदमाप्स्यसि ५७ भाव्यमेतत्तु कथितं मया तव हि पृच्छतः । मन्यसे नानृतं त्वेतत् कुरु सर्वं हि मे वचः ५८

॥ ब्राह्मण उवाच ॥

यच्छामि मातृरगक्षर्थमद्यैवाहं पतिव्रते । करिष्ये त्वद्वचः सर्वं तत्र गत्वा शुभेक्षणे ५९ इत्युक्त्वा गतवान् ब्रह्मन् देवशर्म्मा ततस्त्वरन् । संरक्ष्य मातरं यत्नात्क्रोधमोहविवर्जितः ६० कृत्वा विवाहमुत्पाद्य पुत्रं वंशकरं शुभम् । मृतभार्यश्च संन्यस्य समलोष्टाश्मकाञ्चनः । नरसिंहप्रसादेन परां सिद्धि-

---

१ अयं श्लोको ‘ग’ पुस्तके न । २ ‘यानि कानि च वक्ष्यामी’ति ‘ग’ पुस्तके । ३ ‘यतिकर्मे’ इति ‘ग’ पुस्तके पा० । ४ इदमर्धं ‘कख’ पुस्तकयोर्न विद्यते । ५ ‘सत्य’मिति पाठः ‘क ग’ पुस्तकयोः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मवाप्तवान् ६१ पतिव्रताशक्तिरियं तवेरितां धर्मश्च मातुः परिरक्षणं परम् । संसारवृक्षं च निहत्य बन्धनं छित्वा च विष्णोः पदमेति मानवः ६२ इति श्रीनरसिंहपुराणे ब्रह्मचारिसंवादो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः ।

—:०:०:—

व्यास उवाच ।

शृणुवत्समहाबुद्धे शिष्याश्चैतां परां कथाम् । मयोच्यमानां शृण्वंतु सर्वपापप्रणाशनीम् १ पुरा द्विजवरः कश्चिद्वेदशास्त्रविशारदः । मृतभार्यो गतस्तीर्थं पुण्यस्नानं यथाविधि २ तपः सुतप्तं विजने निस्पृहोदारकर्मणि । भिक्षाहारः प्रवसितो जपस्नानपरायणः ३ स्नात्वा स गङ्गां यमुनां सरस्वतीं पुण्यां वितस्तामथ गोमतीं च । गयां समासाद्य पितॄन् पितामहान् सन्तर्पयन् सन् गतवान् महेंद्रम् ४ तत्रापि कुण्डेषु गिरौ महामतिः स्नात्वानुदृष्ट्वा भृगुनन्दनोत्तमम् । कृत्वा पितृभ्यस्तु तथैव तृप्तिं व्रजन् वनं पापहरं प्रविष्टः ५ धारां पतन्तीं महतीं शिलोच्चयात् संधार्य भक्त्या त्वनुनारसिंहे । शिरस्यशेषाघविनाशनीं तदा विशुद्धदेहः स बभूव विप्रः ६ विन्ध्याचले सक्तमनन्तमच्युतं भक्तैर्मुनीन्द्रैरपि पूजितं सदा । आराध्य पुष्पैर्गिरिसम्भवैः शुभैस्तत्रैव सिद्धिं त्वभिकाङ्क्ष्य संस्थितः । स नारसिंहो बहुकाल पूजया तुष्टः सुनिद्रागतमाह भक्तम् ७ अनाश्रमित्वं गृहभंगकारणं ह्यतो गृहाणाश्रममुत्तमं द्विज । अनाश्रमीति द्विजवेदपारगैरपि त्वहं नानुगृह्णामि चात्र ८ तथापि निष्ठां तव वीक्ष्य सत्तम

१ 'शुभानने' इति 'ग' पुस्तके । २ 'वितस्ता' मित्यतः 'गिरौ महामतिः' इत्यन्तं न 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

त्वयि प्रसन्नेन मयेत्युदीरितम् । तेनैवमुक्तः परमेश्वरेण द्विजोपि बुद्ध्या प्रविचिन्त्य वाक्यम् ९ हरेरलङ्घ्यं नरसिंहमूर्तेर्वाध च कृत्वा स यतिर्बभूव । त्रिदंडवृक्षाक्षपवित्रपाणिराप्लुत्य तीथ त्वघहारिणि स्थितः १० जपन् सदामन्त्रमपास्तदोषं सावित्र्य-मीशं हृदये स्मरन् हरिम् । यथाकथञ्चित् प्रतिलभ्य शाकं भैक्षाभितुष्टो वनवासवासी ११ अभ्यर्च्य विष्णुं नरसिंहमूर्तिं ध्यात्वा च नित्यं हृदि शुद्धमाद्यम् । विविक्तदेशे विपुले कुशा-सने निवेश्य सर्वं हृदयेऽस्य सर्वम् १२ बाह्यं समस्तं गुणमिन्द्रि-याणां विलीय भेदं भगवत्यनन्ते । विज्ञेयमानन्दमजं विशालं सत्यात्मकं क्षेमपदं वरेण्यम् १३ संचिंत्य तस्मिन् प्रविहाय देहं बभूव मुक्तः परमात्मरूपी । इमां कथां मुक्तिपरां यथोक्तां पठन्ति ये नारसिंहं स्मरन्तः १४ प्रयागतीर्थप्लवने तु यत्फलं तत् प्राप्य ते यान्ति हरेः पदं महत् । इत्येतदुक्तं तव पुत्र पृच्छतः पुरातनं पुण्यतमं पवित्रकम् १५ संसारवृक्षस्य विनाशनं परं पुनः किमिच्छस्यभिवाञ्छितं वद १६ ॥ इतिश्रीनरसिंहपुराणे पञ्चदशोध्यायः ॥ १५ ॥

## षोडशोऽध्यायः ।

—०:०—

॥ श्रीशुक उवाच ॥

श्रोतुमिच्छाम्यहं तात साम्प्रतं मुनिभिः सह ॥
संसारवृक्षं सकलं येनेदं परिवर्तते । १ ।
वक्तुमर्हसि मे तात त्वयैतत्सूचितं पुरा ।
नान्यो वेत्ति महाभाग संसारोच्चारलक्षणम् । २ ।

। सूत उवाच ।

स पुत्रेणैवमुक्तस्तु शिष्याणां मध्यगेन च ।
कृष्णद्वैपायनः प्राह संसारतरुलक्षणम् । ३ ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

। व्यास उवाच ।

शृण्वन्तु शिष्याः सकला वत्स त्वं शृणु भावितः । संसारवृक्षं वक्ष्यामि येन चेदं समावृतम् ४ अव्यक्तमूलप्रभवस्तस्मादग्रे तथोच्छ्रितः । बुद्धिस्कंधमयश्चैव इन्द्रियाङ्कुरकोटरः । ५ । महाभूतविशालश्च विशेषैः पत्रशाखवान् । धर्माधर्मसुपुष्पश्च सुखदुःख फलोदयः । आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः । एतद्ब्रह्म परं चैव ब्रह्मवृक्षस्य तस्य तत् । ७ । इत्येवं कथितं वत्स संसारवृक्षलक्षणम् । वृक्षमेनं[3] समारूढा मोहमायान्ति देहिनः ८ संसरन्तीह सततं सुखदुःखसमन्विताः । प्रायेण प्राकृता मर्त्या ब्रह्मज्ञानपराङ्मुखाः ९ छित्त्वैनं कृतिनो यान्ति नो यान्ति ब्रह्मज्ञानिनः । कर्मक्रिये महाप्राज्ञ नैनं छिन्दन्ति दुष्कृताः १० एनं छित्त्वा च भित्त्वा च ज्ञानेन परमासिना । ततोऽमरत्वं ते यान्ति यस्मान्नावर्तते पुनः ११ देहदारमयैः पाशैर्दृढं बद्धोऽपि मुच्यते । ज्ञानमेव परं पुंसां श्रेयसामभिवाञ्छितम् । तोषणं नरसिंहस्य ज्ञानहीनः पशुः पुमान् १२ आहारनिद्राभयमैथुनानि समानमेतत्पशुभिर्नराणाम् । ज्ञानं नराणामधिकं हि लोके ज्ञानेन हीना पशुभिः समानाः १३ इतिश्रीनरसिंहपुराणे षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः ।

॥ श्रीशुक उवाच ॥

संसारवृक्षमारुह्य द्वन्द्वपाशशतैर्दृढैः[3] ।
बध्यमानं सुतैश्वर्यैः पतितो योनिसागरे १
यः कामक्रोधलोभैस्तु विषयैः परिपीडितः ।

---

१ 'रभिपूज्यमान' मिति 'ग' पुस्तके । २ 'तयोश्रित' 'इति ग' पुस्तके । ३ विशाखश्चे' ति 'ग' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

बद्धः स्वकर्मभिर्गौणैः पुत्रदारैषणादिभिः २
स केन निस्तरत्याशु दुस्तरं भवसागरम् ।
पृच्छामाख्याहि मे तात तस्य मुक्तिः कथं भवेत् ३

॥ व्यास उवाच ॥

शृणु वत्स महाप्राज्ञ यज्ज्ञात्वा मुक्तिमाप्नुयात् ।
तच्च वक्ष्यामि ते दिव्यं नारदेन श्रुतं पुरा ४
नरके रौरवे घोरे धर्मज्ञानविवर्जिताः ।
स्वकर्मभिर्महादुःखं प्राप्ता यत्र यमालये ५
महापापकृतं घोरं संप्राप्ताः पापकृज्जनाः ।
इत्युक्त्वा नारदः शीघ्रं गत्वा यत्र त्रिलोचनः ६
गङ्गाधरं महादेवं शङ्करं शूलपाणिनम् ।
प्रणम्य विधिवद्देवं नारदः परिपृच्छति ७

॥ नारद उवाच ॥

यः संसारे महाद्वन्द्वैः कामभोगैः शुभाशुभैः ।
शब्दादिविषयैर्बद्धः पीड्यमानः षडूर्मिभिः ८
कथं नु मुच्यते क्षिप्रं मृत्युसंसारसागरात् ।
भगवन् ब्रूहि मे तत्त्वं श्रोतुमिच्छामि शङ्कर ९
तस्य तद्वचनं श्रुत्वा नारदस्य त्रिलोचनः ।
उवाच तमृषिं शम्भुः प्रसन्नवदनो हरः १०

॥ महेश्वर उवाच ॥

ज्ञानामृतं च गुह्यं च रहस्यमृषिसत्तम । वक्ष्यामि शृणु दुःखघ्नं सर्वबन्धभयापहम् ११ तृणादि चतुरास्यान्तं भूतग्रामं चतुर्विधम् । चराचरं जगत्सर्वं प्रसुप्तं यस्य मायया १२ तस्य विष्णोः प्रसादेन यदि कश्चित्प्रबुध्यते । स निस्तरति संसारं देवानामपि दुस्तरम् १३ भोगैश्वर्यमदोन्मत्तस्तत्त्वज्ञानप-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

राङ्मुखः । संसारसुमहापङ्के जीर्णा गौरिव मज्जति १४
यस्त्वात्मानं निबध्नाति कर्मभिः कोशकारवत् । तस्य मुक्तिं न
पश्यामि जन्मकोटिशतैरपि १५ तस्मान्नारद सर्वेशं देवानां
देवमव्ययम् । आराधयेत्सदा सम्यक् ध्यायेद्विष्णुं समाहितः १६
यस्तं विश्वमनाद्यन्तमाद्यं स्वात्मनि संस्थितम् । सर्वज्ञममलं विष्णुं
सदा ध्यायन् विमुच्यते १७ निर्विकल्पं निराकाशं निष्प्रपं-
चं निरामयम् । वासुदेवमजं विष्णुं सदाध्यायन्विमुच्यते १८
निरंजनं परं शान्तमच्युतं भूतभावनं । देवगर्भं विभुं विष्णुं सदा-
ध्यायन्विमुच्यते १९ सर्वपापविनिर्मुक्तमप्रमेयमलक्षणम् ।
निर्वाणमनघं विष्णुं सदा ध्यायन् विमुच्यते २० अमृतं परमा-
नन्दं सर्वपापविवर्जितम् । ब्रह्मण्यं शङ्करं विष्णुं सदा संकी-
र्त्य मुच्यते २१ योगेश्वरं पुराणाख्यमशरीरं गुहाशयम् । अमा-
त्रमव्ययं विष्णुं सदा ध्यायन्विमुच्यते २२ शुभाशुभविनि-
र्मुक्तं मूर्तिषट्कपरं विभुम् । अचिंत्यममलं विष्णुं सदा
ध्यायन्विमुच्यते २३ सर्वद्वन्द्वविनिर्मुक्तं सर्वदुःखविवर्जितम् ।
अप्रतर्क्यमजं विष्णुं सदा ध्यायन्विमुच्यते २४ अनामगोत्र-
मद्वैतं चतुर्थं परमं पदम् । तं सर्वहृद्गतं विष्णुं सदा ध्यायन्
विमुच्यते २५ अरूपं सत्यसंकल्पं शुद्धमाकाशवत्परम् ।
एकाग्रमनसा विष्णुं सदा ध्यायन्विमुच्यते २६ सर्वात्मकं स्व-
भावस्थमात्मचैतन्यरूपकम् । शुभ्रमेकाक्षरं विष्णुं सदा ध्याय-
न्विमुच्यते २७ अनिर्वाच्यमविज्ञेयमक्षरादिमसम्भवम् । एकं
नूत्नं सदाविष्णुं सदा ध्यायन्विमुच्यते २८ विश्वाद्यं विश्व-
गोप्तारं विश्वादं सर्वकामदम् । स्थानत्रयातिगं विष्णुं सदा
ध्यायन् विमुच्यते २९ सर्वदुःखक्षयकरं सर्वशान्तिकरं हरिम् ।
आनन्दमग्नः पुरुषः कीर्तनादेव मुच्यते ३० ब्रह्मादिदेवगन्धर्वै-

---

१ एतत्पद्यद्वयं 'क ख' पुस्तकयोर्न । २ अनिर्वाच्यमिति पद्यं 'ख' पुस्तके । ३ 'सर्व पापहरं विष्णुं सदा ध्यायन्विमुच्यते' इत्यर्धोऽत्र पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मुनिभिः सिद्धचारणैः। योगिभिः सेवितं विष्णुं सदा ध्यायन् विमुच्यते ३१ विष्णौ प्रतिष्ठितं विश्वं विष्णुर्विश्वे प्रतिष्ठितः। विश्वेश्वरमजं विष्णुं कीर्तनादेव मुच्यते ३२ संसारबन्धनान्मुक्तिमिच्छन् काममशेषतः। भक्त्यैव वरदं विष्णुं सदा ध्यायन् विमुच्यते ३३

॥ व्यास उवाच ॥

नारदेन पुरा पृष्टः एवं स वृषभध्वजः। यदुवाच तदा तस्मै तन्मया कथितं तव ३४ तमेव सततं ध्याहि निर्बीजं ब्रह्म केवलम्। अवाप्स्यसि ध्रुवं तात शाश्वतं पदमव्ययम् ३५ श्रुत्वा सुरऋषिर्विष्णोः प्राधान्यमिदमीश्वरात्। स विष्णुं सम्यगाराध्य परां सिद्धिमवाप्तवान् ३६ यश्चैनं पठते चैव नृसिंहकृतमानसः। शतजन्मकृतं पापमपि तस्य प्रणश्यति ३७ विष्णोःस्तवमिदं पुण्यं महादेवेन कीर्तितम्। प्रातः स्नात्वा पठेन्नित्यममृतत्वं स गच्छति ३८ ध्यायन्ति ये नित्यमनन्तमच्युतं हृत्पद्ममध्येष्वथ कीर्तयन्ति ये। उपासकानां प्रभुमीश्वरं परं ते यान्ति सिद्धिं परमां तु वैष्णवीम् ३९ इति श्रीनरसिंहपुराणे विष्णोस्तवराजनिरूपणे सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः।

॥ श्रीशुक उवाच ॥

किं जपन् मुच्यते तात सततं विष्णुतत्परः ॥
संसारदुःखात्सर्वेषां हिताय वद मे पितः १

॥ व्यास उवाच ॥

अष्टाक्षरं प्रवक्ष्यामि मन्त्राणां मन्त्रमुत्तमम्। यं जपन् मुच्यते मर्त्यो जन्मसंसारबन्धनात् २ हृत्पुण्डरीकमध्यस्थं शंखचक्रगदाधरम्। एकाग्रमनसा ध्यात्वा विष्णुं कुर्याज्जपं द्विजः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

३ एकान्ते निर्जनस्थाने विष्णवग्रे वा जलान्तिके । जपेदष्टाक्षरं मन्त्रं चित्ते विष्णुं निधाय वै ४ अष्टाक्षरस्य मन्त्रस्य ऋषिर्नारायणः स्वयम् । छन्दश्च देवी गायत्री परमात्मा च देवता ५ शुक्लंवर्णं च ॐकारं नकारं रक्तमुच्यते । मोकारं वर्णतः कृष्णं नाकारं रक्तमुच्यते ६ राकारं कुङ्कुमाभं तु यकारं पीतमुच्यते । णाकारमञ्जनाभं तु यकारं बहुवर्णकम् ७ ॐनमोनारायणायेति मन्त्रः सर्वार्थसाधकः । भक्तानां जपतां तात स्वर्गमोक्षफलप्रदः । वेदानां प्रणयेनैष सिद्धो मन्त्रः सनातनः ८ सर्वपापहरः श्रीमान् सर्वमन्त्रेषु चोत्तमः । एनमष्टाक्षरं मन्त्रं जपन्नारायणं स्मरेत् ९ संध्यावसाने सततं सर्वपापैः प्रमुच्यते । एष एव परो मन्त्र एष एव परं तपः १० एष एव परो मोक्ष एषः स्वर्ग उदाहृतः । सर्ववेदरहस्येभ्यः सार एष समुद्धृतः ११ विष्णुना वैष्णवानां हि हिताय मनुजां पुरा । एवं ज्ञात्वा ततो विप्रो ह्यष्टाक्षरमिमं स्मरेत् १२ स्नात्वा शुचिः शुचौ देशे जपेत्पापविशुद्धये । जपे दाने च होमे च गमने ध्यानपर्वसु १३ जपेन्नारायणं मन्त्रं कर्मपूर्वे परे तथा । जपेत्सहस्रं नियुतं शुचिर्भूत्वा समाहितः १४ मासि मासि तु द्वादश्यां विष्णुभक्तो द्विजोत्तमः । स्नात्वा शुचिर्जपेद्यस्तु नमो नारायणं शतम् १५ स गच्छेत्परमं देवं नारायणमनामयम् । गन्धपुष्पादिभिर्विष्णुमनेनाराध्य यो जपेत् १६ महापातकयुक्तोपि मुच्यते नात्र संशयः । हृदि कृत्वा हरिं देवं मन्त्रमेनं तु यो जपेत् १७ सर्वपापविशुद्धात्मा स गच्छेत्परमां गतिम् । प्रथमेन तु लक्षेण आत्मशुद्धिर्भविष्यति १८ द्वितीयेन तु लक्षेण मनुंशुद्धिमवाप्नयात् । तृतीयेन तु लक्षेण स्वर्गलोकमवाप्नुयात्

१ 'शुक्लं च वर्णमोंकारं' इति 'ग' पुस्तके पाठः २ कुङ्गमाकारमिति 'ग' पुस्तके । ३ कर्म पूर्वापरादिषु' 'ग' पुस्तके । ४ अयुतं तु द्विजोत्तम' इति 'ग' पुस्तके । ५ शुभमि' ति वापठः। ६ मन्त्रशुद्धि'मिति 'कग'पुस्तकयो.।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

१९ चतुर्थेन तु लक्षेण हरेः सामीप्यमाप्नुयात् । पञ्चमेन तु लक्षेण निर्मलं ज्ञानमाप्नुयात् । २० । तथा षष्ठेन लक्षेण भवेद्विष्णौ स्थिरा मतिः । सप्तमेन तु लक्षेण स्वरूपं प्रतिपद्यते । २१ अष्टमेन तु लक्षेण निर्वाणमधिगच्छति । स्वस्वधर्मसमायुक्तं जपं कुर्याद्द्विजोत्तमः २२ एतत्सिद्धिकरं मन्त्रमष्टाक्षरमतन्द्रितः दुःस्वप्नासुरपैशाचा उरगा ब्रह्मराक्षसाः २३ जापिनं नोपसर्पन्ति चौरक्षुद्राधयस्तथा । एकाग्रमनसाव्यग्रो विष्णुभक्तो दृढव्रतः २४ जपेन्नारायणं मन्त्रमेतन्मृत्युभयापहम् । मन्त्राणां परमो मन्त्रो देवतानां च दैवतम् २५ गुह्यानां परमं गुह्यमोंकाराद्यक्षराष्टकम् । आयुष्यं धनपुत्रांश्च पशून्विद्यां महद्यशः २६ धर्मार्थकाममोक्षांश्च लभते च जपन्नरः । एतत्सत्यं च धर्म्यं च वेदश्रुतिनिदर्शनात् २७ एतत्सिद्धिकरं नृणां मन्त्ररूपं न संशयः । ऋषयः पितरो देवाः सिद्धास्त्वसुरराक्षसाः २८ एतदेव परं जप्त्वा परां सिद्धिमितो गताः । ज्ञात्वा यस्त्वात्मनः कालं शास्त्रान्तरविधानतः २९ अन्तकाले जपन्नेति तद्विष्णोः परमं पदम् । नारायणाय नम इत्ययमेव सत्यं संसारघोरविषसंहारणाय मन्त्रः ३० शृण्वन्तु भव्यमतयो मुदितास्त्वरागा उच्चैस्तरामुपदिशाम्यहमूर्ध्वबाहुः ३१ भूत्वोर्ध्वबाहुरद्याहं सत्यपूर्वं ब्रवीम्यहं । हे पुत्र शिष्याः शृणुत न मन्त्रोऽष्टाक्षरात्परः ३२ सत्यं सत्यं पुनः सत्यमुत्क्षिप्य भुजमुच्यते । वेदाच्छास्त्रं परं नास्ति न देवः केशवात्परः ३३ आलोच्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ३४ इत्येतत्सकलं प्रोक्तं शिष्याणां तव पुण्यदम् । कथाश्च विविधाः प्रोक्ता मया भज जनार्दनम् ३५ अष्टाक्षरमिमं मन्त्रं सर्वदुःखविनाशनम् । जप पुत्र महाबुद्धे यदि सिद्धिमभीप्ससि ३६ इदं स्तवं व्यासमुखात्तु

---

१ इदं पद्यं 'ग' पुस्तके न । २ तथा षष्ठेन लक्षेण, इति पाठो 'ग' पुस्तके । ३ ' जपं कुर्युर्द्विजोत्तम इति 'ग' पुस्तके । ४ अयं श्लोको 'कख' पुस्तकयोर्न ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

निःसृतं संध्यात्रये ये पुरुषाः पठन्ति ॥ ते धौतपाण्डुरपटा इव राजहंसाः संसारसागरमपेतभयास्तरन्ति ३७ इतिश्रीनरसिंहपुराणेअष्टाक्षरमहात्म्यं नामाष्टादशोऽध्यायः १८

## एकोनविंशोऽध्यायः ।

—०:०—

॥ सूत उवाच ॥

इति श्रुत्वा कथाः पुण्याः सर्वपापप्रणाशनीः ।
नानाविधा मुनिश्रेष्ठाः कृष्णद्वैपायनात्पुनः ॥ १ ॥
शुकः पूर्वं महाभागो भरद्वाजो महामतिः ॥
सिद्धैरन्यैश्च सहितो नारायणपरोऽभवत् ॥ २ ॥
एवं ते कथिता विप्र मार्कण्डेयादिकाः कथाः ॥
मया विचित्राः पापघ्न्यः किं भूयः श्रोतुमिच्छसि ॥ ३ ॥

॥ भरद्वाज उवाच ॥

वस्वादीनां तथा प्रोक्ता मम सृष्टिस्त्वया पुरा ।
अश्विनोर्मरुतां चैव नोक्तोत्पत्तिस्तु तां वद ॥ ४ ॥

॥ सूत उवाच ॥

मरुतां विस्तरेणोक्ता वैष्णवाख्ये महामते । पुराणे शक्तिपुत्रेण पुरोत्पत्तिश्च वायुना ५ अश्विनोर्देवयोश्चैव सृष्टिरुक्ता सुविस्तरात् । संक्षेपात्तव वक्ष्यामि सृष्टिमेतां शृणुष्व मे ६ दक्षकन्याऽदितिः अदितेरादित्यः पुत्रः । तस्मै त्वष्टा दुहितरं संज्ञां नाम कन्यां दत्तवान् ७ सोपि त्वाष्ट्रीं रूपवतीं मनोज्ञां प्राप्य तया सह रेमे । सा कतिपयात् कालात् स्वभर्तुरादित्यस्य तापमसहन्ती पितुर्गृहं जगाम ८ तामवलोक्य सुतां पितोवाच । किं पुत्रि तव भर्ता सविता स्नेहार्द्रां रक्षत्युत परुष इति ९

१ 'शुभाः' इति 'ग' पुस्तके पाठः । २ 'महापवित्रा' इति वा पाठः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

एवं पितुर्वचनं श्रुत्वा संज्ञा तं प्रत्युवाच दग्धाहं भर्तुः प्रचण्डतापादिति १० एवं श्रुत्वा तामाह पिता गच्छ पुत्रि भर्तुर्गृहमिति ११ युवतीस्त्रीणां भर्तुः शुश्रूषणमेव धर्मः श्रेयान् । अहमपि कतिपयदिवसादागत्यादित्यस्योष्णतां जामातुरुद्धरिष्यामि १२ इत्युक्ता सा च पुनर्भर्तुर्गृहं प्राप्य कतिपयदिवसान्मनुं यमीं यमं चापत्यत्रयमादित्यात्प्रासूत । पुनस्तदुष्णतामसहतीं छायां भर्तुरुपभोगाय स्वप्रज्ञाबलेनोत्पाद्य तत्र संस्थाप्य गत्वोत्तरकुरूनधिष्ठायाश्वी भूत्वा विचचार १३ आदित्योपि संज्ञेयमिति मत्वा तस्यां जायायां पुनरपत्यत्रयमुत्पादयामास १४ मनुं शनैश्चरं तपतीं च । स्वेष्वपत्येषु पक्षपातेन वर्ततीं छायां दृष्ट्वा यमः स्वपितरमाह नेयमस्मन्मातेति १५ पितापि तच्छ्रुत्वा भार्यां प्राह । सर्वेष्वपत्येषु सममेव वर्ततामिति १६ पुनरपि स्वेष्वपत्येषु स्नेहात्प्रवर्ततीं छायां दृष्ट्वा यमो यमी च तां बहुविधमपीत्थमुवाच । आदित्यसंनिधानात्तूष्णीं बभूवतुः १७ ततश्छाया तयोः शापं दत्तवती। यम त्वं प्रेतराजो भव यमि त्वं यमुना नाम नदी भवेति १८ ततः क्रोधादादित्योपि छाया पुत्रयोः शापं दत्तवान् हे पुत्र शनैश्चर त्वं ग्रहो भव क्रूरदृष्टिर्मन्दगामी च पापग्रहस्त्वं च १९ पुत्रि तपती नाम नदी भवेति। अथादित्यो ध्यानमास्थाय संज्ञा क्व स्थितेति विचारयामास २० स दृष्टवानुत्तरकुरुषु ध्यानचक्षुषाऽश्वी भूत्वा विचरन्तीं । स्वयं चाश्वरूपेण तत्र गत्वा तया सह संपर्कं कृतवान् २१ तस्यामेवादित्यादश्विनावुत्पन्नौ तयोरतिशयवपुषोः साक्षात् प्रजापतिरागत्य देवत्वं यज्ञभागत्वं मुख्यं च देवानां भिषजत्वं दत्त्वा जगाम । आदित्यश्चाश्वरूपं विहाय स्वभार्यां संज्ञां त्वाष्ट्रीं स्वरूपधारिणीं नीत्वा स्वरूपमास्थाय दिवं जगाम २२

१ 'ज्येष्ठपुत्रे' इति 'क ख' पुस्तकयोः। २ इदं वाक्यं न 'क ख' पुस्तकयोः।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

विश्वकर्मा चागत्य आदित्यं नामभिःस्तुत्वा तदतिशयोष्णतांश-तामपंशातयामास २३ एवं वः कथिता विप्रा अश्विनोत्पत्तिरुत्तमा । पुण्या पवित्रा पापघ्नी भरद्वाज महामते २४ आदित्य पुत्रौ भिषजौ सुराणां दिव्येन रूपेण विराजमानौ । श्रुत्वा तयोर्जन्म नरः पृथिव्यां भवेत्सुरूपो दिवि मोदते च २५ इति श्रीनरसिंहपुराणे अश्विनोरुत्पत्तिर्नाम एकोनविंशोऽध्यायः १९

## विंशोऽध्यायः ।

॥ भारद्वाज उवाच ॥

यैः स्तुतो नामभिस्तेन सविता विश्वकर्मणा ॥
तान्यहं श्रोतुमिच्छामि वद सूत विवस्वतः ॥ १ ॥

॥ सूत उवाच ॥

तानि मे शृणु नामानि यैः स्तुतो विश्वकर्मणा । सविता तानि वक्ष्यामि सर्वपापहराणि ते २ आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् । तिमिरोन्मथनः शम्भुस्त्वष्टा मार्तण्ड आशुगः ३ हिरण्यगर्भः कपिलस्तपनो भास्करो रविः । अग्निगर्भो दितेः पुत्रः शम्भुस्तिमिरनाशनः ४ अंशुमानंशुमाली च तमोघ्नस्तेजसां निधिः । आतपी मण्डली मृत्युः कपिलः सर्व तापनः ५ हरिर्विश्वो महातेजाः सर्वरत्नप्रभाकरः । अंशुमाली तिमिरहा ऋग्यजुःसामभावितः ६ प्राणाविष्करणो मित्रः सुप्रदीपो मनोजवः । यज्ञेशो गोपतिः श्रीमान् भूतज्ञः क्लेश नाशनः ७ अमित्रहा शिवो हंसो नायकः प्रियदर्शनः । शुद्धो विरोचनः केशी सहस्रांशुः प्रतर्दनः ८ धर्मरश्मिः पतङ्गश्च विशालो विश्वसंस्तुतः । दुर्विज्ञेयगतिः शूरस्तेजोराशिर्महायशाः ९ भ्राजिष्णुर्ज्योतिषामीशो विजिष्णुर्विश्वभावनः । प्रभविष्णुः

१ 'शातयमास' इति 'ग' पुस्तके पाठः । २ 'तमोभेदी' ति 'ग' पुस्तके । ३ 'भावित' इति 'क ग' पुस्तयोः । ४ 'घनाविष्करण' इति 'ग' पुस्तके । ५ 'विश्वसारोपिसंस्तुत इति 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

प्रकाशात्मा ज्ञानराशिः प्रभाकरः १० आदित्यो विश्वदृक् यज्ञकर्ता नेता यशस्करः । विमलो वीर्यवानीशो योगज्ञो योगभावनः ११ अमृतात्मा शिवो नित्यो वरेण्यो वरदः प्रभुः । धनदः प्राणदः श्रेष्ठः कामदः कामरूपधृक् १२ तरणिः शाश्वतः शास्ता शास्त्रज्ञस्तपनः शयः । वेदगर्भो विभुर्वीरः शान्तः सावित्रिवल्लभः १३ ध्येयो विश्वेश्वरो भर्ता लोकनाथो महेश्वरः । महेन्द्रो वरुणो धाता विष्णुरग्निर्दिवाकरः १४ एतैस्तु नामभिः सूर्यः स्तुतस्तेन महात्मना । उवाच विश्वकर्माणं प्रसन्नो भगवान् रविः १५ भ्रमिमारोप्य मामत्र मण्डलं मम शातय । त्वद्बुद्धिस्थं मया ज्ञातमेवमौष्ण्यं शमं व्रजेत् । इत्युक्तो विश्वकर्मा च तथा स कृतवान् द्विज १६ शान्तोष्णः सविता तस्य दुहितुर्विश्वकर्मणः । संज्ञायाश्चाभवद्द्विज भानुस्त्वष्टारमब्रवीत् १७ त्वया यस्मात् स्तुतोहं वै नाम्नामष्टशतेन च । वरं वृणीष्व तस्मात् त्वं वरदोहं तवा नघ १८ इत्युक्तो भानुना सोथ विश्वकर्माऽब्रवीदिदम् । वरदो यदि मे देव वरमेतं प्रयच्छ मे १९ एतैस्तु नामभिर्यस्त्वां नरःस्तोष्यति नित्यशः । तस्य पापक्षयं देव कुरु भक्तस्य भास्कर २० तेनैवमुक्तो दिनकृत्तथेति त्वष्टारमुक्त्वा विरराम भास्करः । संज्ञां विशङ्कां रविमण्डलस्थितां कृत्वा जगामाथ रविं प्रसाद्य २१ इति श्रीनरसिंहपुराणेविंशोऽध्यायः २०

## एकविंशतितमोऽध्यायः ।

—:०:०:—

॥ श्रीसूत उवाच ॥

साम्प्रतं मारुतोत्पत्तिं वक्ष्यामि द्विजसत्तम । पुरा देवासुरे युद्धे देवैरिन्द्रादिभिर्दितेः १ पुत्राः पराभूताः दितिश्च विनष्ट-

१ 'प्रिय' इति 'ग' पुस्तके । २ इदमर्धं 'ग' पुस्तके विद्यते ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पुत्रा महेन्द्रदर्पहरं पुत्रमिच्छन्ती कश्यपमृषिं स्वपतिमाराधयामास २ स च तपसा सन्तुष्टो गर्भाधानं चकार तस्यां । पुनस्तामेवमुक्तवान् ३ यदि त्वं शुचिः सती शरच्छतमिमं गर्भं धारयिष्यसि ततश्च महेन्द्रदर्पहन्ता पुत्रो भविष्यति । इत्येवमुक्त सा च तं गर्भं धारयामास ४ इन्द्रोऽपि तज्ज्ञात्वा वृद्धब्राह्मणरूपेणागत्य दितिपार्श्वे स्थितवान् । किंचिदूनपूर्णे वर्षशते पादशौचमकृत्वा दितिः शयनमारुह्य निद्रां गता ५ सोपिलब्धावसरो वज्रपाणिस्तत्कुक्षिं प्रविश्य वज्रेण तं गर्भं सप्तधा चिच्छेद । सोऽपि तेन प्रच्छिद्यमानः रुरोद ६ मारोदीरिति वदन्निन्द्रस्तान् सप्तधैकैकं चिच्छेद ७ सप्तधा ते सर्वे मरुतो यतो जातमात्रान्मारोदीरित्युक्तवान् । महेन्द्रस्य सहाया अमी मरुतो नाम देवा बभूवुः ८ एवं मुने सृष्टिरियं तवेरिता देवासुराणां नरनागरक्षसाम् । वियन्मुखानामपि यः पठेदिदं शृण्वंश्च भक्त्या हरिलोकमेति सः ९ इतिश्रीनरसिंहपुराणे एकविंशतितमोऽध्यायः २१ ॥

## सृष्टिकाण्डं समाप्तम् ।

—०:०—

## द्वाविंशोऽध्यायः ।

॥ भारद्वाज उवाच ॥

अनुसर्गश्च सर्गश्च त्वया चित्रा कथेरिता ।
वंशमन्वन्तरे ब्रूहि वंशानुचरितं च मे ॥ १ ॥

॥ सूत उवाच ॥

राज्ञां वंशः पुराणेषु विस्तरेण प्रकीर्तितः । संक्षेपात्कथयिष्यामि वंशमन्वन्तराणि ते २ वंशानुचरितं चैव शृणु विप्र

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

महामते । शृण्वन्तु मुनयश्चेमे श्रोतुमागत्य ये स्थिताः ३ आदौ तावद्ब्रह्मा ब्रह्मणो मरीचिः । मरीचेः कश्यपः कश्यपा दादित्यः ४ आदित्यान्मनुः मनोरिक्ष्वाकुः इक्ष्वाकोर्विकुक्षिः विकुक्षेर्द्योतः द्योताद्वेनो वेनात्पृथुः पृथोः पृथाश्वः ५ पृथाश्वा-दसंख्याताश्वः । असंख्याताश्वान्मान्धाता ६ मान्धातुः पुरु-कुत्सः पुरुकुत्साद्दृषदो दृषदादभिशम्भुः ७ अभिशंभोर्दारुणः । दारुणात्सगरः ८ सगरात् हर्यश्वो हर्यश्वाद्धारीतः ९ हारी ताद्रोहिताश्वः रोहिताश्वादंशुमान् । अंशुमतो भगीरथः १० भगीरथात्सौदासः । सौदासाच्छत्रुंदमः ११ शत्रुन्दमादनरणः अनरणाद्दीर्घबाहुः दीर्घबाहोरजः १२ अजाद्दशरथः । दशरथाद्रामः रामाल्लवःलवात्पद्मः । पद्मादनुपर्णः । अनुपर्णाद्वस्त्रपाणिः १४ वस्त्र-पाणेःशुद्धोदनः । शुद्धोदनाद्बुधः । बुधादादित्यवंशोनिवर्तते १५ सूर्यवंशभवास्ते ते प्राधान्येन प्रकीर्तिताः । यैरियं पृथिवी भुक्ता धर्मतः क्षत्रियैः पुरा १६ सूर्यस्य वंशः कथितो मया मुने समुद्गता यत्र नरेश्वराः पुरा । मयोच्यमानाञ्छशिनः समाहितः शृणुष्व वंशेऽथ नृपाननुत्तमान् १७ ॥ इतिश्री सूर्यवंशकथनं नाम द्राविंशोऽध्यायः २२

## त्रयोविंशतितमोऽध्यायः ।

॥ सूत उवाच ॥

सोमवंशं शृणुष्वाथ भरद्वाज महामुने । पुराणे विस्तरेणोक्तं संक्षेपात्कथयेऽधुना १ आदौ तावद्ब्रह्मा ब्रह्मणो मानसः पुत्रो मरीचिर्मरीचेर्दाक्षायिण्यां कश्यपः २ कश्यपाददितेरादित्यः । आदित्यात्सुवर्चलायां मनुः ३ मनोः सुरूपायां सोमः सोमा-द्रोहिण्यां बुधः । बुधादिलायां पुरूरवाः ४ पुरूरवसः आयुः

---

१ 'पुरुकुत्सादसदश्वः असदश्वादभिशम्भु' रिति 'ग' पुस्तके । २ 'अनरण्योऽनरण्या' दिति 'ग' पुस्तके । ३ अयं श्लोको न 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

आयो रूपवत्यां नहुषः ५ नहुषात्पितृवत्यां ययातिः। ययातेः शर्मिष्ठायां पुरुः ६ पुरोर्वंशदायां सम्पातिः। संपातेर्भानुदत्तायां सार्वभौमः। सार्वभौमस्य वैदेह्यां भोजः ७ भोजस्य लिङ्गायां दुष्यन्तः। दुष्यन्तस्य शकुन्तलायां भरतः ८ भरतस्य नन्दायामजमीढः। अजमीढस्य सुदेव्यां पृश्निः। पृश्नेरुग्रसेनायां प्रसरः। प्रसरस्य बहुरूपायां शान्तनुः। शान्तनोर्योजनगन्धायां विचित्रवीर्यः। विचित्रवीर्यस्याम्बिकायां पाण्डुः ९ पाण्डोः कुन्तिदेव्यामर्जुनः। अर्जुनात्सुभद्रायामभिमन्युः १० अभिमन्योरुत्तरायां परीक्षितः। परीक्षितस्य मातृवत्यां जनमेजयः। जनमेजयस्य पुण्यवत्यां शतानीकः ११ शतानीकस्य पुष्पवत्यां सहस्रानीकः। सहस्रानीकस्य मृगवत्यामुदयनः। तस्य वासवत्तायां नरवाहनः। १२ नरवाहनस्याश्वमेधायां क्षेमकः। क्षेमकान्ताः पाण्डवाः सोमवंशोनिवर्तते १३ य इदं शृणुयान्नित्यं राजवंशमनुत्तमम्। सर्वपापविशुद्धात्मा विष्णुलोकं स गच्छति १४ यश्चेदं पठते नित्यं श्राद्धे वा श्रावयेत्पितॄन्। वंशानुकीर्तनं पुण्यं पितॄणां दत्तमक्षयम् १५ राज्ञां हि सोमस्य मया तवेरिता वंशानुकीर्तिर्द्विज पापनाशनी। शृणुष्व विप्रेन्द्र मयोच्यमानं मन्वन्तरं चापि चतुर्दशाख्यम् १६ ॥ इति श्रीनरसिंहपुराणे सोमवंशानुकीर्तनं नाम त्रयोविंशतितमोऽध्यायः२३

## चतुर्विंशोऽध्यायः।

॥ सूत उवाच ॥

प्रथमं तावत्स्वायंभुवं मन्वन्तरं तत्स्वरूपं कथितम्। सर्गादौ स्वारोचिषो नाम द्वितीयो मनुः १ तस्मिन् स्वारोचिषे मन्व-

१ 'पितृदेवत्या' इति 'ग' पुस्तके। २ 'विशोकाया' मिति 'ग' पुस्तके। ३ 'पृष्ठिः पृष्ठे' इति 'ग' पुस्तके। ४ 'सूनवत्या' मिति 'ग' पुस्तके ५ 'श्राद्धे ताञ्छ्रावयेद्द्विजा' निति 'क ग' पुस्तकयोः।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

न्तरे विपश्चिन्नाम देवेन्द्रः । पारावताः सतुषिता देवाः २ ऊर्जस्तम्बः सुप्राणो दन्तो निर्ऋषभो वरीयानीश्वरः सोमः सप्तर्षयश्चैवं । किंपुरुषाद्याः स्वारोचिषस्य मनोः पुत्रा राजानो भवन्ति ३ तृतीये उत्तमो नाम मनुः । सुधामानः सत्याः शिवाः । प्रतर्दना वंशवर्तिनश्च देवाः पञ्चैते द्वादशगणाः ४ तेषां सुशान्तिरिन्द्रः ५ वद्याः सप्तर्षयोऽभवन् । अत्र परशुचित्राद्या मनोः सुताः ६ चतुर्थस्तामसो नाम ननुः । तत्र मन्वन्तरे सुराः पराः सत्याः सुधियश्च सप्तविंशतिका गणाः ७ तत्र सुशुण्डी नाम देवेन्द्रः । हिरण्यरोमा देवश्रीरूर्ध्वबाहुर्देवबाहुः सुधामा पर्जन्यो मुनिरित्येते सप्तर्षयः ८ ज्योतिर्धामा पृथुः काश्योऽग्निर्धनक इत्येते तामसस्य मनोः पुत्रा राजानः ९ पञ्चमो नाम रैवतो मनुः । तस्यान्तरेऽमिता निरता वैकुण्ठाः सुमेधस इत्येतेदेवगणाश्चतुर्दशका गणाः । सुरान्तको नाम देवेन्द्रः सप्तकाद्या मनोः सुता राजानो वै बभूवुः १० शान्तः शान्तभवो विद्वांस्तपस्वी मेधावी सुतपाः सप्तर्षयोभवन् ११ षष्ठश्चाक्षुषो नाम मनुः । पुरुशतद्युम्नप्रमुखास्तस्य सुता राजानः । सुशान्ता आद्याः प्रसूतः भव्याः प्रथिताश्च महानुभावा लेखाद्याः पञ्चैते ह्यष्टका गणास्तत्र देवाः १२ तेषामिन्द्रो मनोजवः । मेधा सुमेधा विरजा हविष्मानुत्तमो मतिमान्नाम्ना सहिष्णुश्चैते सप्तर्षयः १३ सप्तमो वैवस्वतो मनुः सांप्रतं वर्तते । तस्य पुत्रा इक्ष्वाकुप्रभृतयः क्षत्रिया भूभुजः १४ आदित्यविश्ववसुरुद्राद्या देवाः पुरन्दरोऽत्र देवेन्द्रः । १५ वसिष्ठःकश्यपोऽत्रिर्जमदग्नि-

१ 'पारापता' इति 'क ख' पुस्तकयोः । २ 'पञ्चैते द्वादशगणा' इति 'ग' पुस्तक एव । ३ 'शिखण्डी नामे' ति 'ग' पुस्तके । ४ 'चतुर्दशकाद्यागणिः' इत्याधिक 'ग' पुस्तके एव । ५ 'बलवान्प्रघातन इति 'ग' पुस्तकेऽधिकम् । ६ 'शान्तभयो' इति 'ग' पुस्तके पाठः । ७ 'सुशान्ता' इति न 'क ख' पुस्तकयोः ।



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

गौतमविश्वामित्रभरद्वाजाः सप्तर्षयो भवन्ति १६ भविष्याणि मन्वन्तराणि कथ्यन्ते । तद्यथा आदित्यात् संज्ञायां जातो यो मनुः । पूर्वोक्तश्छायायामुत्पन्नो मनुर्द्वितीयः स तु पूर्वजस्य सावर्णस्य मन्वन्तरं सावर्णिकमष्टमं शृणु १७ मनुः सावर्णो-ऽष्टमो भविता तत्र सुतपाद्या देवगणास्तेषां बलिरिन्द्रो भविता १८ दीप्तिमान् गालवो नामा कृपद्रोणिव्यासऋष्यशृङ्गाश्च सप्तर्षयो भवितारः । विराजोर्वरीयनिर्मोकाद्याः सावर्णस्य मनोः सुता राजानो भविष्यन्ति १९ नवमो दक्षसावर्णिर्मनुर्भविता । धृतिः कीर्तिर्दीप्तिः केतुः पञ्चहस्तो निरामयः पृथुश्रवाद्या दक्षसावर्णराजानोऽस्य मनोः पुत्राः २० मरीचिगर्भाः सुधर्माणो हविष्मन्तस्तत्र देवताः तेषामिन्द्रोऽद्भुतः २१ सवनः कृतिमान् हव्यो वसुर्मेधातिथिर्ज्योतिष्मानित्येते सप्तर्षयः २२ दशमो ब्रह्मसावर्णिर्मनुर्भविता विरुद्धादयस्तत्र देवाः । तेषां शान्तिरिन्द्रः हविष्मान् सुकृतिः सत्यस्तपोमूर्तिः नाभागः प्रतिमोकः सप्तकेतुरित्येते सप्तर्षयः २३ सुक्षेत्र उत्तमो भूरिषेणादयो ब्रह्मसावर्णिपुत्रा राजानो भविष्यन्ति २४ एकादशे मन्वन्तरे धर्मसावर्णिको मनुः २५ सिंहसवनादयो देवगणाः । तेषां दिवस्पतिरिन्द्रः २६ निर्मोहिस्तत्त्वदर्शी निकम्पो निरुत्साहो धृतिमान् रुच्य इत्येते सप्तर्षयः । चित्रसेनविचित्राद्या धर्मसावर्णिपुत्रा भूभृतो भविष्यन्ति २७ रुद्रसावर्णिर्भविता द्वादशो मनुः २८ कृतधामा तत्रेन्द्रो हरिता रोहिताः सुमनसः सुकर्माणः सुतपाश्च देवाः २९ तपस्वी चारुतपा स्तपोमूर्तिः तपोरतिस्तपोधृतिर्ज्योतिस्तप इत्येते सप्तर्षयः ३० देववान् देवश्रेष्ठाद्यास्तस्य मनोः सुता भूपाला भविष्यन्ति ३१ त्रयोदशो रुचिनाम मनुः । स्त्रग्वी वाणः सुधर्माणप्रभृतयो देव-

---

१ य.तिमानिति 'क ग' पुस्तकयोः । २ सिंहसमयं वाचागमनिर्वाणरुचय 'इति' ग' पुस्तके ।

गणाः । तेषामिन्द्र ऋषभो नाम भविता ३२ निश्चरोऽग्नि तेजा वपुष्मान् धृष्टः वारुणिर्हविष्मान् नहुषो भव्य इति सप्तर्षयः । सुधर्मा देवानीकादयस्तस्य मनोः पुत्राः पृथ्वीश्वरा भविष्यन्ति ३३ भौमश्चतुर्दशो मनुर्भविता । सुरुचिस्तत्रेन्द्रः ॥ चक्षुष्मन्तः पवित्रः कनिष्ठाभाः देवगणाः ३४ अग्निबाहुशुचिशुक्रमाधवशिवाभिजितश्वासा इत्येते सप्तर्षयः । उरुगम्भीरब्रह्माद्यास्तस्य मनोः सुता राजानः ३५ एवं ते चतुर्दश मन्वन्तराणि कथितानि । राजानश्च यैरियं वसुधा पाल्यते ३६ मनुसप्तर्षयो देवा भूपालाश्च मनोः सुताः । मन्वन्तरे भवन्त्येते शक्राश्चैवाधिकारिणः ३७ चतुर्दशभिरेतैस्तु गतैर्मन्वन्तरैर्द्विज । सहस्रयुगपर्यन्तः कालो गच्छति वासरः ३८ तावत्प्रमाणा च निशा ततो भवति सत्तम । ब्रह्मरूपधरः शेते सर्वात्मा नृहरिः स्वयम् ३९ त्रैलोक्यमखिलं ग्रस्ता भगवानादिकृद्विभुः । स्वमायामास्थितो विप्र सर्वरूपी जनार्दनः ४० अथ प्रबुद्धो भगवान् यथापूर्वं तथा पुनः । युगव्यवस्थां कुरुते सृष्टिं च पुरुषोत्तमः ४१ एते तवोक्ता मनवोऽमराश्च पुत्राश्च भूपामुनयश्च सर्वे विभूतयस्तस्य स्थितौ स्थितस्य तस्यैव सर्वं त्वमवेहि विप्र ४२ ॥ इति श्रीनरसिंहपुराणे चतुर्विंशतितमोऽध्यायः २४ ॥

## पञ्चविंशतितमोऽध्यायः ।

॥ श्रीसूत उवाच ॥

अतःपरं प्रवक्ष्यामि वंशानुचरितं शुभम् । शृण्वतामपि पापघ्नं सूर्यसोमनृपात्मकम् १ सूर्यवंशोद्भवो यो वै मनुपुत्रः पुरोदितः । इक्ष्वाकुर्नाम भूपालश्चरितं तस्य मे शृणु २ असीद्भूमौ महाभाग पुरी दिव्या सुशोभना । सरयूतीरमासाद्य अयोध्यानाम-

---

१ 'निश्चिरोऽग्नि' रिति 'ग' पुस्तके पाठः । २ 'अग्निबाहु' रिति 'ग' पुस्तके । ३ यथापूर्वमकल्पय' दिति 'ग' पुस्तके।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नामतः ३ अमरावत्यतिशया त्रिंशद्योजनजालिनी । हस्त्यश्वरथपत्त्यौघैर्द्रुमैः कल्पद्रुमप्रभैः ४ प्राकाराट्टप्रतोलीभिस्तोरणैः काञ्चनप्रभैः । विराजमाना सर्वत्र सुविभक्तचतुष्पथा ५ अनेकभूमिप्रासादा बहुभाण्डसुविक्रया । पद्मोत्पलश्रुभैः स्तोयैर्वापीभिरुपशोभिता ६ देवतायतनैर्दिव्यैर्वेदघोषैश्च शोभिता । वीणावेणुमृदङ्गैश्च शब्दैरुत्कृष्टकैर्युता ७ शालैस्तालैर्नालिकेरैः पनसामलजम्बूकैः । तथैवाम्रकपित्थाद्यैरशोकैरुपशोभिता ८ आरामैर्विविधैर्युक्ता सर्वत्र फलपादपैः । मल्लिकामालतीजातिपाटलानागचम्पकैः ९ करवीरैः कर्णिकारैः केतकीभिरलंकृता । कदलीजातिकदलीमातुलुङ्गमहाफलैः १० 'क्वचिच्चन्दनगन्धाद्यैर्नारङ्गैश्च सुशोभिता' । नित्योत्सवप्रमुदिता गीतवाद्यविचक्षणैः । नरनारीभिराढ्याभी रूपद्रविणप्रेक्षणैः ११ नानाजनपदाकीर्णा पताकाध्वजशोभिता । देवतुल्यप्रभायुक्तैर्नृपपुत्रैश्च संयुता १२ सुरूपाभिर्वरस्त्रीभिर्देवस्त्रीभिरिवावृता । विप्रैः सत्कविभिर्युक्ता बृहस्पतिसमप्रभैः १३ वणिग्जनैस्तथा पौरैः कल्पवृक्षवरैर्युता । अश्वैरुच्चैःश्रवस्तुल्यैर्दन्तिभिर्दिग्गजैरिव १४ इति नानाविधैर्भावैरयोध्येन्द्रपुरीसमा । तां दृष्ट्वा नारदः श्लोकं सभामध्ये पुरोक्तवान् १५ स्वर्गं वै सृजमानस्य व्ययं स्यात्पद्मजन्मनः । जातायोध्याऽधिका स्वर्गात् कामभोगैसमन्विता १६ तामावसदयोध्यां तु स्वभिषिक्तो महीपतिः । जितवान् सर्वभूपालान् धर्मेण समहाबलः १७ माणिक्यमुकुटैर्युक्तै राजभिर्मण्डलाधिपैः । नमद्भिर्भक्तिभीतिभ्यां पादौ तस्य किणीकृतौ १८ इक्ष्वाकुरक्ष-

---

१ 'बहुभान्ति सुविक्रिया' इति 'क' पुस्तके । २ सौधै'रिति 'क ख' पुस्तकयोः । ३ 'कदली लवली जाति'—इति 'ग' पुस्तके । ४ इदमर्धं 'क ख' पुस्तयोर्न । ५ 'समृद्धिजै' रिति 'क ख' पुस्तकयोः । ६ कर्मभोगसमन्विता' इति 'क ख' पुस्तकयोः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तवलः सर्वशास्त्रविशारदः । तेजसेन्द्रेण सदृशो मनोः सूनुः प्रतापवान् १९ धर्मतो न्यायतश्चैव वेदज्ञैर्ब्राह्मणैर्युतः । पालयामास धर्मात्मा आसमुद्रां महीमिमाम् २० 'अष्टौ विजगाय सक्लान्संयुगे भूपतीन्बली । अत्रजित्य सुतीक्ष्णैस्तु तन्मण्डलमथाहरत्'। जितवान् परलोकांश्च क्रतुभिर्भूरिदक्षिणैः । दानैश्च त्रिविधैर्ब्रह्मन् राजेक्ष्वाकुः प्रतापवान् २१ बाहुद्वयेन वसुधां जिह्वाग्रेण सरस्वतीम् । बभार पद्मामुरसा भक्तिं चित्तेन माधवे २२ संतिष्ठन्तं हरेरूपमुपविष्टं च माधवम् । शयानमप्यनन्तं तु कारयित्वा पटेऽमलम् २३ त्रिकालं त्वयमाराध्य रूपं विष्णोर्महात्मनः । गन्धपुष्पादिभिर्नित्यं रेमे दृष्ट्वा पटे हरिम् २४ कृष्णं तं कृष्णमेघाभं भुजगेन्द्रनिवासिनम् । पद्माक्षं पीतवासं च स्वप्नेष्वपि स दृष्टवान् २५ चकार मेघे तद्वर्णे बहुमानमतिं नृपः । 'पक्षपातं च तन्नाम्नि मृगे पद्मे च तादृशे' । दिव्याकृतिं हरेः साक्षाद्द्रष्टुं तस्य महीभृतः २६ अतीव तृष्णा सञ्जाता अपूर्वैव हि सत्तम । तृष्णायां तु महत्यायां मनसैव हि पार्थिवः २७ चिन्तयामास मतिमान् राज्यभोगमसारवत् । वेश्मदारसुतक्षेत्रं संन्यस्तं येन दुःखदम् २८ वैराग्यज्ञानपूर्वेण लोकेस्मिन्नास्ति तत्समः । इत्येवं चिन्तयित्वा तु तपस्यासक्तचेतनः २९ वसिष्ठं परिपप्रच्छ तत्रोपायं पुरोहितम् । तपोबलेन देवेशं नारायणमजं मुने ३० द्रष्टुमिच्छाम्यहं तत्र उपायं तं वदस्व मे । इत्युक्तः प्राह राजानं तपस्यासक्तमानसम् ३१ वसिष्ठः सर्वधर्मज्ञः सदा तस्य हिते रतः । यदीच्छसि महाराज द्रष्टुं नारायणं परम् ३२ तपसा सुकृतेनेह आराधय जनार्दनम् । केनाप्यतप्ततपसा देवदेवो जनार्दनः ३३ द्रष्टुं न शक्यते जातु तस्मात्त्वं तपसार्चय ।

---

१ नेदं पद्यं 'क ख' पुस्तकयोः । २ इदमर्धं 'ग' पुस्तके न । ३ इदमर्धं 'ग' पुस्तक एव ।

पूर्वदक्षिणदिग्भागे सरयूतीरगं नृप ३४ गालवप्रमुखानां च ऋषीणामस्ति चाश्रमः । पञ्चयोजनमध्वानं स्थानमस्मात्तु पाव नम् ३५ नानाद्रुमलताकीर्णं नानापुष्पसमाकुलम् । स्वमन्त्रिणि महाप्राज्ञे नीतिमत्यर्जुने नृप ३६ स्वराज्यभारं विन्यस्य कर्म- काण्डमपिद्विज । स्तुत्वाराध्य गणाध्यक्षमितो व्रज विनाय- कम् ३७ तपःसिद्ध्यर्थमन्विच्छंस्तस्मात्तत्र तपः कुरु । तापसं वेषमास्थाय शाकमूलफलाशनः ३८ ध्यायन्नारायणं देवमिमं मन्त्रं सदा जप । ॐनमो भगवते वासुदेवाय । एष सिद्धि- करो मन्त्रो द्वादशाक्षरसंज्ञितः ३९ जप्त्वैनं मुनयः सिद्धिं परां प्राप्ताः पुरातनाः । गत्वागत्वा निवर्त्तन्ते चन्द्रसूर्यादयो ग्रहाः ४० अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः । बाह्ये- न्द्रियं हृदिस्थाप्य मनः सूक्ष्मे परात्मनि ४१ नृप संजप तन्मन्त्रं द्रष्टव्यो मधुसूदनः । इति ते कथितोपायो हरिप्राप्ते- स्तपःकृतौ ४२ पृच्छतः साम्प्रतं भूयो यदीच्छसि कुरुष्व तत् । इत्येवमुक्तो मुनिना स राजा राज्यं भुवो मन्त्रिवरे समर्प्य । स्तुत्वा गणेशं सुमनोभिरर्च्य गतः पुरात् स्वात्तपसे धृतात्मा ४३ इति श्रीनरसिंहपुराणे इक्ष्वाकुचरित्रे पञ्चविंश तितमोऽध्यायः २५

## षड्विंशतितमोऽध्यायः

॥ भरद्वाज उवाच ॥

कथं स्तुतो गणाध्यक्षस्तेन राज्ञा महात्मना ॥
यथा तेन तपस्तप्तं तन्मे वद महामते ॥ १ ॥

१ 'गत्वा हि विनिवर्तन्ते' इति 'ग' पुस्तके

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ सूत उवाच ॥

चतुर्थीदिवसे राजा स्नात्वा त्रिषवणं द्विज । रक्ताम्बरधरो भूत्वा रक्तगन्धानुलेपनः २ सुरक्तकुसुमैर्हृद्यैर्विनायकमथार्चयन् । रक्तचन्दनतोयेन स्नानपूर्वं यथाविधि ३ विलिप्य रक्तगन्धेन रक्तपुष्पैः प्रपूजयत् । ततो सौदत्तवान्धूपमाज्ययुक्तं सचन्दनम् नैवेद्यं चैव हारिद्रं गुडखण्डघृतप्लुतम् ४ एवं सुविधिना पूज्य विनायकमथास्तुवीत् ।

॥ इक्ष्वाकुरुवाच ॥

नमस्कृत्य महादेवं स्तोष्येऽहं तं विनायकम् ५ महागणपतिं शूरमजितं ज्ञानवर्धनम् । एकदन्तं द्विदन्तं च चतुर्दन्तं चतुर्भुजम् ६ त्र्यक्षं त्रिशूलहस्तं च रक्तनेत्रं वरप्रदम् । आम्बिकेयं शूर्पकर्णं प्रचण्डं च विनायकम् ७ आरक्तं दण्डिनं चैव वह्निवक्त्रं हुतप्रियम् । अनर्चितो विघ्नकरः सर्वकार्येषु यो नृणाम् ८ तं नमामि गणाध्यक्षं भीममुग्रमुमासुतम् । मदमत्तं विरूपाक्षं भक्तविघ्ननिवारकम् ९ सूर्यकोटिप्रतीकाशं भिन्नाञ्जनसमप्रभम् । बुद्धं सुनिर्मलं शान्तं नमस्यामि विनायकम् १० नमोस्तु गजवक्त्राय गणानां पतये नमः । मेरुमन्दररूपाय नमः कैलासवासिने ११ विरूपाय नमस्तेस्तु नमस्ते ब्रह्मचारिणे । भक्तस्तुताय देवाय नमस्तुभ्यं विनायक १२ त्वया पुराणपूर्वेषां देवानां कार्यसिद्धये । गजरूपं समास्थाय त्रासिताः सर्व दानवाः १३ ऋषीणां देवतानां च नायकत्वं प्रकाशितम् । यतस्ततः सुरैरुग्रैः पूज्यसे त्वं भवात्मज १४ त्वामाराध्य गणाध्यक्षं सर्वज्ञं कामरूपिणम् । कार्यार्थं रक्तकुसुमै रक्तचन्दनवारिभिः १५ रक्ताम्बरधरो भूत्वा चतुर्थ्यामर्चये-

---

१ 'मधूककुसुमप्रभ' मिति 'ग' पुस्तके । २ 'गजरूपाय' इति 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

जपेत् । त्रिकालमेककालं वा पूजयेन्नियताशनः १६ राजानं राजपुत्रं वा राजमन्त्रिणमेव वा । राज्यं च सर्वविघ्नेशवशं कुर्यात्सुराष्ट्रकम् १७ अविघ्नं तपसो मह्यं कुरु नौमि विनायक । मयेत्थं संस्तुतो भक्त्या पूजितश्च विशेषतः १८ यत्फलं सर्वतीर्थेषु सर्वयज्ञेषु यत्फलम् । तत्फलं पूर्णमाप्नोति स्तुत्वा देवं विनायकम् १९ विषमं न भवेत्तस्य न च गच्छेत्पराभवम् । 'न च विघ्नो भवेत्तस्य जातो जातिस्मरो भवेत् । य इदं पठते स्तोत्रं षड्भिर्मासैर्वरं लभेत् ।' संवत्सरेण सिद्धिं च लभते नात्र संशयः २०

॥ सूत उवाच ॥

एवं स्तुत्वा पुरा राजा गणाध्यक्षं द्विजोत्तमः । तापसं वेषमास्थाय तपश्चर्तुं गतो वनम् २१ उत्सृज्य वस्त्रं नागत्वक्सदृशं बहुमूल्यकम् । कठिनां तु त्वचं वार्क्षीं कट्यां धत्ते नृपोत्तमः २२ तथा रत्नानि दिव्यानि वलयानि निरस्य तु । अक्षसूत्रमलंकारं फलैः पद्मस्य शोभनम् २३ तथोत्तमाङ्गे मुकुटं रत्नहाटकशोभितम् । त्यक्त्वा जटाकलापं तु तपोर्थे बिभृयान्नृपः २४ कृत्वेत्थं स तपोवेषं वसिष्ठोक्तं तपोवनम् । प्रविश्य च तपस्तेपे शाकमूलफलाशनः २५ ग्रीष्मे पञ्चाग्निमध्यस्थोऽतपत्कालं महातपाः । वर्षाकाले निरालम्बो हेमन्ते च सरोजले २६ इन्द्रियाणि समस्तानि नियम्य हृदये पुनः । मनो विष्णौ समावेश्य मन्त्रं वै द्वादशाक्षरम् २७ जपतो वायुभक्षस्य तस्य राज्ञो महात्मनः । आविर्बभूव भगवान् ब्रह्मा लोकपितामहः २८ तमागतमथालोक्य पद्मयोनिं चतुर्मुखम् । प्रणम्य भक्तिभावेन स्तुत्या च पर्यतोषयत् २९ नमो हिरण्यगर्भाय जगत्स्रष्ट्रे महात्मने । वेदशास्त्रार्थविदुषे चतुर्वक्त्राय ते नमः ३० इति स्तुतो जगत्स्रष्टा

१ इदं पद्यं न 'क ख' पुस्तकयोः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ब्रह्मा प्राह नृपोत्तमम् । तपस्यभिरतं शान्तं सक्तराज्यं महासुखम् ३१

॥ ब्रह्मोवाच ॥

लोकप्रकाशको राजन् सूर्यस्तव पितामहः । मुनीनामपि सर्वेषां सदा मान्यो मनुः पिता ३२ कृतवन्तौ तपः पूर्वं तीव्रं पितृपितामहौ । तावत्तीर्थे तपस्तेपे यावदागांनिहस्य वै (?)। ३३ किमर्थं राज्यभोगं तु त्यक्त्वा सर्वं नृपोत्तम । तपः करोषि घोरं त्वं समाचक्ष्व महामते ३४ इत्युक्तो ब्रह्मणा राजा तं प्रणम्याब्रवीद्वचः । द्रष्टुमिच्छंस्तपश्चर्याबलेन मधुसूदनम् ३५ करोम्येव तपो ब्रह्मन् शंखचक्रगदाधरम् । इत्युक्तः प्राह राजानं पद्मजन्मा हसन्निव ३६ न शक्यस्तपसा द्रष्टुं त्वया नारायणो विभुः । मादृशैरपि नो दृश्यः केशवः क्लेशनाशनः ३७ पुरातनीं पुण्यकथां कथयामि निबोध मे । निशान्ते प्रलये लोकान् निनाय कमलेक्षणः ३८ अनन्तभोगशयने योगनिद्रां गतो हरिः । सनन्दनाद्यैर्मुनिभिस्तूयमानो महामते ३९ तस्य सुप्तस्य नाभौ तु महत्पद्ममजायत । तस्मिन् पद्मे शुभे राजन् जातोहं वेदवित्पुरा ४० ततो भूत्वा त्वधोदृष्टिर्दृष्टवान् कमलेक्षणम् । अनन्तभोगपर्यङ्के भिन्नाञ्जननिभं हरिम् ४१ अतसीकुसुमाभासं शयानं पीतवाससम् । दिव्यरत्नविचित्राङ्गं मुकुटेन विराजितम् ४२ कुन्देन्दुसदृशाकारमनन्तं च महामते । सहस्रफणमध्यस्थैर्मणिभिर्दीप्तिमन्ततः ४३ क्षणमात्रं तु तं दृष्ट्वा पुनस्तत्र न दृष्टवान् । दुःखेन महताविष्टो बभूवाहं नृपोत्तम ४४ ततोवतरतस्तस्मात् पद्मनालं समाश्रितः । कौतूहलेन तं द्रष्टुं नारायणमनामयम् ४५ ततस्त्वन्विष्य राजेन्द्रसलिलान्तं न दृष्टवान् । श्रीशं पुनस्तमेवाहं पद्ममाश्रित्य

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

चिन्तयन् । तद्रूपं वासुदेवस्य द्रष्टुं तेपे महत्तपः । ततो मामन्तरिक्षस्था वागुवाचाशरीरिणी ४५ वृथा किं क्लिश्यते ब्रह्मन् सांप्रतं कुरु मे वचः । न दृश्यो भगवान् विष्णुस्तपसा महतापि ते । सृष्टिं कुरु तदाज्ञप्तो यदि द्रष्टुमिहेच्छसि । शुद्धस्फटिकसंकाशं नागपर्यङ्कशायिनम् ४६ यद्दृष्टं शार्ङ्गिणो रूपं भिन्नाञ्जनसमप्रभम् । प्रतिभानियतं रूपं विमानस्थं महामते ४७ भज नित्यमनालस्यस्ततो द्रक्ष्यसि माधवम् । तयेत्थं चोदितो राजन् सक्ता तत्क्षमनुक्षणम् ४८ सृष्टवान् लोकभूतानां सृष्टिं सृष्ट्वा स्थितस्य च । आविर्बभूव मनसि विश्वकर्मा प्रजापतिः ४९ अनन्तकृष्णयोस्तेन द्वेरूपे निर्मिते शुभे । विमानस्थौ यथापूर्वं मया दृष्टौ जले नृप ५० तथैव तं ततो भक्त्या संपूज्याहं हरिं स्थितः । त्वत्प्रसादात्तपः श्रेष्ठं मया ज्ञानमनुत्तमम् ५१ लब्ध्वा मुक्तिं च पश्यामि अविकारक्रियासुखम् । तदहं ते प्रवक्ष्यामि हितं नृपवरेश्वर ५२ विसृज्य तत्तपो घोरं पुरीं व्रज निजां नृप । प्रजानां पालनं धर्मस्तपश्चैव महीभृताम् ५३ विमानं प्रेषयिष्यामि सिद्धद्विजगणान्वितम् । तत्राराध्य देवेशं वाद्याद्यैरखिलैः शुभैः ५४ नारायणमनन्ताख्यं शयानं क्रतुभिर्यजन् । निष्कामो नृपशार्दूल प्रजा धर्मेण पालय ५५ प्रसादाद्वासुदेवस्य मुक्तिस्ते भविता नृप । इत्युक्ता तं जगामाथ ब्रह्मलोकं पितामहः ५६ इक्ष्वाकुश्चिन्तयन्नास्ते पद्मयोनिवचो द्विज । आविर्बभूव पूरतो विमानं तन्महीभृतः ५७ ब्रह्मदत्तं द्विजयुतं माधवानन्तयोः शुभम् । तं दृष्ट्वा परया भक्त्या नत्वा च पुरुषोत्तमम् ५८ ऋषीन् प्रणम्य विप्रांश्च तदादाय ययौ पुरीम् । पौरैर्जनैश्च नारी-

---

१ 'वाचा तयेत्थं भो राजंश्चोदितोऽहं तपोऽत्यजमिति 'ग' पुस्तके । २ विमानस्थमुराद्दृष्टं यथापूर्वं जले नृप' इति 'ग' पुस्तके । ३ क्रियाशुभमिति वा पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

भिर्दृष्टशोभासमन्वितैः ५९ लाजा विनिक्षिपद्भिश्च नीतो राजा स्वकं गृहम् । स्वमन्दिरे विशाले तु विमानं वैष्णवं शुभम् ६० संस्थाप्याराधयामास तैर्द्विजैरर्चितं हरिम् । महिष्याः शोभनायास्तु पिष्ट्वा तु हरिचन्दनम् ६१ मालां कृत्वा सुगन्धाढ्यां प्रीतिस्तस्य ववर्ध ह । पौराः कर्पूरश्रीखण्डं कुङ्कुमाद्यागुरुं तथा ६२ कृत्स्नं विशेषतो वस्त्रं महिषाख्यं च गुग्गुलुम् । पुष्पाणि विष्णुयोग्यानि ददुरानीय भूपतेः ६३ विमानस्थं हरिं पूज्य गन्धपुष्पादिभिः क्रमात् । त्रिसंध्यं परया भक्त्या जपैःस्तोत्रैश्च वैष्णवैः ६४ गीतैः कोलाहलैः शब्दैः शंखवादित्रनादितैः । प्रेक्षणैरपि शास्त्रोक्तैः प्रीतैश्च निशि जागरैः ६५ कारयामास सुचिरमुत्सवं परमं हरेः । यागैश्च तोषयित्वा तं सर्वदेवमयं हरिम् ६६ निष्कामो दानधर्मैश्च परं ज्ञानमवाप्तवान् । यजन् यज्ञं महीं रक्षन् स कुर्वन् केशवार्चनम् ६७ उत्पाद्य पुत्रान् पित्रर्थं ध्यानात्त्यक्त्वा कलेवरम् । ध्यायन्वै केवलं ब्रह्म प्राप्तवान्वैष्णवं पदम् ६८ अजं विशोकं विमलं विशुद्धं शान्तं सदानन्दचिदात्मकं ततः । विहाय संसारमनन्तदुःखं जगाम तद्विष्णुपदं हि राजा ६९ ॥ इतिश्रीनरसिंहपुराणे इक्ष्वाकुचरिते षड्विंशतितमोऽध्यायः २६

## सप्तविंशोऽध्यायः ।

—०:०—

॥ श्रीसूत उवाच ॥

इक्ष्वाकोर्विकुक्षिनामपुत्रः स तु सिद्धे पितरि महर्षिभिरभिषिक्तो धर्मेण पृथिवीं पालयन् विमानस्थमनन्तभोगशायिनमच्युतमाराध्य यागैरपि देवानिष्ट्वा स्वपुत्रं राज्ये सुबाहुमभिषिच्य

१ 'केशवानन्तमन्दिराणि' ति 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

दिवमारुरोह । सुबाहोर्भ्राजमानाद्युद्योतोभिगीयते । स तु सप्तद्वीपां पृथ्वीं धर्मेण पालयित्वा भक्तिं परां नारायणे पितामहवत् कृत्वा क्रतुभिर्भूरिदक्षिणैः यज्ञेश्वरं निष्कामेन मनसेष्ट्वा नित्यं निरञ्जनं निर्विकल्पं परं ज्योतिरमृताक्षरं परमात्मरूपं ध्यात्वा हरिमनन्तं च परमाराध्य स्वर्गलोकं गतः १ असंहताश्वस्य मान्धाता पुत्रोभवत् । स चाभिषिक्तो महर्षिभिः निसर्गादेव विष्णुभक्तोनन्तशयनमच्युतं भक्त्याराधयन् यागैश्च विविधैरिष्ट्वा सप्तद्वीपवतीं पृथिवीं परिपाल्य दिवं गतः २ यस्यैष श्लोको गीयते । यावत्सूर्य उदेतिस्म यावच्च प्रतितिष्ठति । सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ३ तस्य पुरुकुत्सोभवत् येन देवा ब्राह्मणाश्च यागदानैः सन्तुष्टाः ४ पुरुकुत्सात् दृषदो दृषदादभिशम्भुः । अभिशम्भोर्दारुणः दारुणात्सगरः ५ सगराद्धर्यश्वः हर्यश्वाद्धारीतो हारीताद्रोहिताश्वः । रोहिताश्वादंशुमान् ६ अंशुमतो भगीरथः। येन महता तपसा पुरा दिवो गङ्गा अशेषकल्मषनाशनी चतुर्विधपुरुषार्थदायिनी भुवमानीता । 'अस्थिशर्कराभूताः कपिलमहर्षिनिर्दग्धाश्च गुरवः सगराख्या गङ्गातोयसंस्पृष्टा दिवमारोपिताः'। भगीरथात् सौदासः सौदासात्सत्रसवः ७ सत्रसवादनरण्योऽनरण्याद्दीर्घबाहुः ८ दीर्घबाहोरजः अजाद्दशरथः । तस्य गृहे रावणविनाशार्थं साक्षान्नारायणोवतीर्णो रामः ९ स तु पितृवचनाद्भ्रातृभार्यासहितो दण्डकारण्यं प्राप्य 'तपश्चचार' वने रावणापहृतभार्यो भ्रात्रा सह दुःखितोऽनेककोटिवानरनायकसुग्रीवसहायो महोदधौ सेतुं निबध्य तैर्गत्वा लङ्कां रावणं देवकण्टकं सबान्धवं हत्वा सीतामादाय पुनरयोध्यां प्राप्य भरताभिषिक्तो विभीषणाय लङ्काराज्यं विमानं वा दत्वा तं प्रेषयामास । स तु परमेश्वरो विमानस्थो विभीषणेन नीयमानो लङ्कायामपि राक्षसपुर्यां वस्तुमनिच्छन् पुण्यारण्यं तत्र

---

१ इदं वाक्यं 'क ख' पुस्तकयोर्न । २ इदं पदद्वयं 'क ख' पुस्तकयोर्न ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्थापितवान् १० तन्निरीक्ष्य तत्रैव महाहिभोगशयने भगवान् शेते । सोपि विभीषणस्ततोतद्विमानं नेतुमसमर्थः तद्वचनात्स्वां पुरीं जगाम ११ 'नारायणसंनिधानान्महद्वैष्णवं क्षेत्रमभवदद्यापि दृश्यते' रामाल्लवो लवात्पद्मः पद्मादृतुपर्ण ऋतुपर्णादस्त्रपाणिः । अस्त्रपाणेः शुद्धोदनः शुद्धोदनाद्बुधः बुधाद्वंशो निवर्तते १२ एते महीपा रविवंशजास्तव प्राधान्यतस्ते कथिता महाबलाः । पुरातनैर्यैर्वसुधा प्रपालिता यज्ञक्रियाभिश्च दिवौकसैर्नृपैः १३ ॥ इति श्रीनरसिंहपुराणे सूर्यवंशानुचरितंनाम सप्तविंशतितमोऽध्यायः ॥ २७ ॥

## अष्टविंशोऽध्यायः ।

—०:०—

॥ सूत उवाच ॥

अथ सोमवंशोद्भवानां भूभुजां संक्षेपेण चरितमुच्यते । आदौ तावत् समस्तं त्रैलोक्यं कुक्षौ कृत्वा एकार्णवे महाम्भसि नागभोगशयने २ ऋङ्मयो यजुर्मयः साममयोथर्वमयो भगवान्नारायणो योगनिद्रां समारेभे । तस्य सुप्तस्य नाभौ महापद्ममजायत । तस्मिन् पद्मे चतुर्मुखो ब्रह्माभवत् ३ तस्य ब्रह्मणो मानसःपुत्रोत्रिरभवत् । अत्रेरनसूयायां सोमः स तु प्रजापतेर्दक्षस्य त्रयस्त्रिंशत्कन्या रोहिण्याद्या भार्यार्थं गृहीत्वा प्रियायां ज्येष्ठायां विशेषात्प्रसन्नमनाः रोहिण्यां बुधं पुत्रमुत्पादयामास ४ बुधोपि सर्वशास्त्रज्ञः प्रतिष्ठाने पुरेऽवसत् । इलायां पुरूरवसं पुत्रमुत्पादयामास । तस्यातिशयरूपान्वितस्य स्वर्गभोगान्विहाय उर्वशी बहुकालं भार्या बभूव ५ पुरूरवसः उर्वश्यामायुः पुत्रो जज्ञे । स तु राज्यं धर्मतः कृत्वा दिवमारुरोह ६

---

१ इदं वाक्यं 'म' पुस्तक एव विद्यते ।



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

आयो रूपवत्यां नहुषः पुत्रोभवत् । येनेन्द्रत्वं प्राप्तम् । नहुषस्यापि पितृमत्यां ययातिः ७ यस्य वंशजा वृष्णयः । ययातेः शर्मिष्ठायां पूरुरभवत् ८ पूरोर्वंशदायां संयातिः पुत्रोभवत् । यस्य पृथिव्यां सम्पन्नाः सर्वे कामाः ९ संयातेर्भानुदत्तायां सार्वभौमः । स तु सर्वां पृथिवीं धर्मेण परिपालयन्नरसिंहं भगवन्तमाराध्य यागदानैः सिद्धिमाप[1] १० तस्य सार्वभौमस्य वैदेह्यां भोजः । यस्य वंशे पुरा देवासुरसंग्रामे विष्णुचक्रहतः कालनेमिः कंसो भूत्वा वृष्णिवंशजेन वासुदेवेन घातितो निधनं गतः ११ तस्य भोजस्य कलिङ्गायां दुष्यन्तः । स तु नरसिंहं भगवन्तमाराध्य तत्प्रसादान्निष्कण्टकं राज्यं धर्मेण कृत्वा दिवं प्राप्तवान् । दुष्यन्तस्य शकुन्तलायां भरतः । स तु धर्मेण राज्यं कुर्वन् क्रतुभिर्भूरिदक्षिणैः सर्वदेवतामयं भगवन्तमाराध्य निवृत्ताधिकारो ब्रह्मध्यानपरो वैष्णवे परे ज्योतिषि लयमवाप १२ भरतस्य आनन्दायामजमीढः । स च परमवैष्णवो नरसिंहमाराध्य जातपुत्रो धर्मेण कृतराज्यो विष्णुपुरमारुरोह १३ अजमीढस्य सुदेव्यां वृष्णिः पुत्रोऽभवत् । सोऽपिबहुवर्षं धर्मेण राज्यं कुर्वन् दुष्टनिग्रहं शिष्टपरिपालनं सप्तद्वीपां वशे चक्रे । वृष्णेरुग्रसेनायां प्रत्यञ्चपुत्रो बभूव १४ सोपि धर्मेण मेदिनीं पालयन् प्रतिसंवत्सरं ज्योतिष्टोमं चकार निर्वाणमपि लब्धवान् । प्रत्यञ्चस्य बहुरूपायां शान्तनुः १५ यस्य देवदत्तस्यन्दनारोहणमशक्यं बभूव पुरतः शक्यं च १६

॥ भरद्वाज उवाच ॥

स्यन्दनारोहणे पूर्वमशक्तिः शन्तनोः कथम् ।
पश्चाच्छक्तिः कथं चासीत् तस्य वै तद्वदस्व नः ॥ १ ॥

---

१ सिद्धिमलभत इति 'ग' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ सूत उवाच ॥

भरद्वाज शृणुष्वैतत्पुरावृत्तं वदामि ते । सर्वपापहरं तद्धि चरितं शन्तनोर्नृणाम् २ बभूव शन्तनुर्भक्तो नरसिंहतनौ पुरा । नारदोक्तविधानेन पूजयामास माधवम् ३ नरसिंहस्य देवस्य निर्माल्यं तेन लङ्घितम् । राज्ञा शन्तनुना विप्र तस्मात्स्यन्दनमुत्तमम् ४ देवदत्तं तदारोढुमशक्तस्तत्क्षणादभूत् । किमियं मे गतिर्भग्ना सहसा वै रथात्ततः ५ दुःखं चिन्तयतस्तस्य सम्प्राप्तो नारदः किल । किं विषण्णः स्थितो राजन्निति पृष्टः स शन्तनुः ६ नारदैतन्न जानामि गतिभङ्गस्य कारणम् । इत्युक्तो नारदो ध्यात्वा ज्ञात्वा तत्कारणं ततः ७ शन्तनुं प्राह राजानं विनयेन यतः स्थितः । यत्र क्वापि त्वया राजन्नरसिंहस्य वै ध्रुवम् ॥ निर्माल्यो लङ्घितस्तस्माद्रथारोहणकर्मणि । गतिर्भग्ना महाराज श्रूयतामत्र कारणम् । अन्तर्वेद्यां पुरा राजन् आसीत्कश्चिन्महामतिः ८ मालाकारो रविर्नाम्ना तेन वृन्दावनं कृतम् । विविधानि च पुष्पार्थं वनानि सुकृतानि वै ९ मल्लिकामालतीजातिबकुलादीनि सर्वशः । प्राकारमुच्छ्रितं तस्य स्वभूमौ चापि विस्तृतम् १० अलङ्घ्यमप्रवेश्यं च कृत्वा चक्रे स्वकं गृहम् । गृहं प्रविश्य तद्द्वारं भवेतान्यत्र सत्तम ११ एवं कृत्वा नु वसतो मालाकारस्य धीमतः । पुष्पितं तद्वनं त्वासीद्गन्धामोदितदिङ्मुखम् १२ भार्यया सह पुष्पाणि समाहृत्य दिने दिने । कृत्वा माला यथान्यायं नरसिंहस्य नित्यशः १३ ददौ काश्चिद्द्विजेभ्यश्च काश्चिद्विक्रीय पोषणम् । चक्रे समात्पजीवी च भार्यादेरात्मनस्तथा १४ अथ स्वर्गादुपागम्य इन्द्रपुत्रो रथेन वै । अप्सरोगणसंयुक्तो निशि पुष्पाणि संहरेत् १५ तद्गन्धलिप्सुः सर्वाणि विचित्याहृत्य गच्छति । दिनेदिने हृते पुष्पे मालाकारोप्यचिन्तयत् १६ नान्यद्द्वारं वनस्यास्य लङ्घ्यप्राका-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रमुन्नतम् । समस्तपुष्पजातस्य हरणे निशि वै नृणाम् १७ अहं शक्तिं न पश्यामि किमिदं नु परीक्षये । इति सञ्चिन्त्य मेधावी जाग्रद्रात्रौ वने स्थितः १८ तथैवागत्य पुष्पाणि संगृहीत्वा गतः पुमान् । तं दृष्ट्वा दुःखितोतीव माल्यजीवी वनेऽभवत् १९ ततो निद्राङ्गते स्वप्ने दृष्टवांस्तं नृकेसरिम् । तद्वाक्यं श्रुतवांश्चैवं निर्माल्यं मम पुत्रक २० आनीय क्षिप्यतां क्षिप्रं पुष्पारामसमीपतः । इन्द्रपुत्रस्य दुष्टस्य नान्यदस्ति निवारणम् इति श्रुत्वा हरेर्वाक्यं नरसिंहस्य धीमतः । बुध्द्वानीय तु निर्माल्यं तथा चक्रे यथोदितम् २२ सोप्यागत्य यथापूर्वं रथेनालक्षितेन तु । रथादुत्तीर्य पुष्पाणि विचिन्वंस्तद्भुवि स्थितम् २३ निर्माल्यं लङ्घयामास इन्द्रसूनुरनिष्टकृत् । ततस्तस्य न शक्तिः स्याद्रथारोहणकर्मणि २४ उक्तः सारथिना चैव रथस्यारोहणे तव । नरसिंहस्य निर्माल्यं लङ्घने नास्ति योग्यता २५ गच्छामि दिवमेवाहं त्वं भूम्यां वस मा रुह । तेनैवमुक्तो मतिमांस्तमाह हरिनन्दनः २६ पापस्य नोदनं त्वत्र कर्मणा येन मे भवेत् । तदुक्त्वा गच्छ नाकं त्वं कर्मास्मान्सारथे द्रुतम् २७

॥ सारथिरुवाच ॥

रामसत्रे कुरुक्षेत्रे द्वादशाब्दे तु नित्यशः । द्विजोच्छिष्टाप[2] नयनं कृत्वा त्वं शुद्धिमेष्यसि २८ इत्युक्त्वासौ गतः स्वर्गं सा[3] रथिर्देवसेवितम् । इन्द्रसूनुः कुरुक्षेत्रं माप्तः सारस्वतं तटम् २९ रामसत्रे तथा कुर्याद्द्विजोच्छिष्टस्य मार्जनम् । पूर्णे द्वादशमे वर्षे तमूचुः शङ्किता द्विजाः ३० कस्त्वं ब्रूहि महाभाग निसमुच्छिष्टमार्जकः । न भुञ्जसे च नः सत्रे शङ्का नो महती भवेत् ३१ इत्युक्तः कथयित्वा तु यथावृत्तमनुक्रमात् । जगाम त्रिदिवं विप्र

---

१ 'जाग्रद्रात्री' इति 'ग' पुस्तके पाठः । २ द्विजोच्छिष्टापमार्जमिति 'क' पुस्तके । ३ 'प्रायाश्चित्तेन शोधनम्' इति 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रथेन तनयो हरेः ३२ तस्मात्त्वमपि भूपाल ब्राह्मणोच्छिष्टमार्जनात् । मार्ज्जनं कुरु रामस्य सत्रे द्वादशवार्षिके । ब्राह्मणेभ्यः परं नास्ति सर्वपापहरं परम् । एवं कृते देवदत्तस्यन्दनारोहणे गतिः ३३ भविष्यति महीपाल प्रायश्चित्ते कृते तव । अत ऊर्ध्वं च निर्माल्यं मा लङ्घय महामते ३४ नरसिंहस्य देवस्य तथान्येषां दिवौकसाम् । इत्युक्तः शन्तनुस्तेन ब्राह्मणोच्छिष्टमार्जनम् ३५ कृतवान् द्वादशाब्दं तु आरुरोह रथं च तम् । एवं पूर्वमशक्तिः स्यात् रथारोहे महीक्षितः ३६ पश्चात्तस्यैव विप्रेन्द्र शक्तिरेवमजायत ३७ एवं ते कथितो विप्र दोषो निर्माल्यलङ्घने । पुण्यं तथा द्विजानां तु प्रोक्तमुच्छिष्टमार्जने ३८ भक्त्या द्विजोच्छिष्टमिहापमार्जयेच्छुचिर्नरो यः सुसमाहितात्मा । स पापबन्धं प्रविहाय भुङ्क्ते गवां प्रदानस्य फलं दिवि स्थितः ३९ ॥ इति श्रीनरसिंहपुराणे शन्तनुचरितंनामाष्टविंशतितमोऽध्यायः २८

## एकोनत्रिंशोऽध्यायः ।

॥ श्रीसूत उवाच ॥

शन्तनोर्योजनगन्धायां विचित्रवीर्यः स तु हस्तिनापुरे स्थित्वा प्रजाः स्वधर्मेण पालयन् देवांश्च यागैः पितॄंश्च श्राद्धैः सन्तर्प्य संजातपुत्रो दिवमारुरोह १ विचित्रवीर्यस्याम्बालिकायां पण्डुः पुत्रो जज्ञे सोपि राज्यं धर्मतः कृत्वा । मृगशापाच्छरीरं विहाय देवलोकमवाप । तस्य पण्डोः कुन्तिदेव्यामर्जुनः २ स तु महता तपसा शंकरं तोषयित्वा पाशुपतमस्त्रमवाप्य त्रिविष्टपाधिपतेः शत्रून् निवातकवचान् दानवान् हत्वा खाण्डव वनमग्नेर्यथारुचि निवेद्य तृप्ताग्नितो दिव्यान्वरानवाप्य सुयोधनेन

१ 'मुनिशापात्' इति 'ग' पुस्तके पाठः । २ 'पाशुपतास्त्रम्' इत्येवं 'क' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

हृतराज्यो धर्मभीमनकुलसहदेवद्रौपदीसहितो विराटनगरेऽज्ञातवासं चरित्वा गोग्रहे च भीष्मद्रोणकृपदुर्योधनकर्णादीन् जित्वा समस्तगोमण्डलं निर्वर्त्तयित्वा भ्रातृभिः सह विराटराजकृतपूजो वासुदेवसहितः कुरुक्षेत्रे धार्त्तराष्ट्रैर्बहुबलै र्युद्धं कुर्वन् भीष्मद्रोणकृपशल्यकर्णादिभिर्भूरिपराक्रमैः क्षत्रियैर्नानादेशागतैरनेकैरपि राजपुत्रैः सह दुर्योधनादीन् धार्त्तराष्ट्रान् हत्वा स्वराज्यं प्राप्य धर्मेण राज्यं परिपाल्य भ्रातृभिः सह मुदितो दिवमारुरोह ३ अर्जुनस्य सुभद्रायामभिमन्युः येन भारतयुद्धे चक्रव्यूहं प्रविश्यानेकभूभुजो निधनं प्रापिताः ४ अभिमन्योरुत्तरायां परीक्षितः । सोप्यभिषिक्तो वनं गच्छता धर्मपुत्रेण राज्यं कृत्वा राजपुत्रो नाकं सम्प्राप्य रेमे ५ परीक्षितान्मातृवत्यां जनमेजयः । येन ब्रह्महत्यावारणार्थं महाभारतं व्यासशिष्याद्वैशंपायनात् साद्यन्तं श्रुतं ६ राज्यं च धर्मतः कृत्वा दिवमारुरोह । जनमेजयस्य पुष्पवत्यां शतानीकः ७ सतु धर्मेण राज्यं कुर्वन् संसारदुःखाद्विरक्तः शौनकोपदेशेन क्रियायोगेन सकललोकनाथं विष्णुमाराध्य निष्कामो वैष्णवं पदमवाप । तस्य शतानीकस्य फलवत्यां सहस्रानीकः ८ स तु बाल एवाभिषिक्तो नरसिंहेऽत्यन्तं भक्तिमानभवत् । तस्य चरित्रमुपरिष्टाद्भविष्यति ९ सहस्रानीकस्य मृगवत्यामुदयनः । सोपि राज्यं कृत्वा धर्मतो नारायणमाराध्य तत्पुरमवाप १० उदयनस्य वासवदत्तायां नरवाहनः । स तु यथान्यायं राज्यं कृत्वा दिवमवाप । नरवाहनस्याश्वमेधदत्तायां क्षेमकः ११ स च राज्यस्थः प्रजाः परिपाल्य म्लेच्छाभिभूते जगति ज्ञानबलात् कलापग्राममाश्रितः १२ यः श्रद्दधानः पठते शृणोति वा हरौ च भक्तिश्चरितं महीभृताम् ॥ स सन्ततिं प्राप्य विशुद्धकर्म-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

क्रुद्विरं समासाद्य वसेच्चिरं सुखी ॥ १३ ॥   ॥ इति श्रीनरसिंहपुराणे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

॥ वंशानुचरितं समाप्तम् ॥

# त्रिंशोऽध्यायः ।

—:०—

॥ श्रीसूत उवाच ॥

अतः परं प्रवक्ष्यामि भूगोलं द्विजसत्तमाः ॥
संक्षेपात्पर्वताकीर्णं नदीभिश्च समन्ततः ॥ १ ॥

जम्बुप्लक्षशाल्मलकुशक्रौञ्चशाकपुष्करसंज्ञाः सप्तद्वीपाः । लक्ष योजनप्रमाणाज्जम्बुद्वीपादुत्तरोत्तरद्विगुणाः १ लवणासुरासर्पिर्दधिदुग्धस्वच्छोदकसंज्ञैः परस्परंद्विगुणैः सप्तसमुद्रैर्वलयाकारैस्ते द्वीपाः परिधिष्ठिताः २ यो सौ मनुपुत्रः प्रियव्रतो नाम स सप्तद्वीपाधिपतिर्बभूव । तस्य अग्नीध्रादयो दश पुत्रा बभूवुः ३ त्रयः प्रव्रजिताः । शिष्टानां सप्तानां सप्तद्वीपाः पित्रा दत्ताः । तत्र जम्बुद्वीपाधिपतेराग्नीध्रस्य नव पुत्रा जाताः ४ नाभिः किंपुरुषश्चैव हरिवर्ष इलावृतः । रम्यो हिरण्मयश्चैव कुरुभद्रश्च केतुमान् ५ नववर्षाः विभज्य पुत्रेभ्यः पित्रा दत्ता वनं प्रविशता । अग्नीध्रीयं हिमाव्हयम् । यस्याधिपतिर्नाभिः ऋषभः पुत्रो बभूव ५ ऋषभाद्भरतो भरतेन चिरकालं धर्मेण पालितत्वादिदं भारतं वर्षमभूत् । इलावृतस्य मध्ये मेरुः सुवर्णमयश्चतुराशीतिसहस्राणि योजनानि तस्योच्छ्रायः । षोडशसहस्रमप्यधस्तादवगाढः तद्द्विगुणो मूलविस्तारः ६ तन्मध्ये ब्रह्मणः पुरी । ऐन्द्र्यामिन्द्रस्य चामरावती । आग्नेय्यामग्नेस्तेजोवती । याम्यां यमस्य संयमनी । नैर्ऋत्यां निर्ऋतेर्भ

१ 'नाभेरग्नीध्र संज्ञा' इति वा पाठः । २ । 'मूर्ध्निविस्तार' इति 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यंकरी । वारुण्यां वरुणस्य विश्वावती । वायव्यां वायोर्गन्धवती उदीच्यां सोमस्य विभावरीति नववर्षान्वितं जंबूद्वीपं पुण्यपर्वतैः पुण्यनदीभिरन्वितम् ७ किंपुरुषादीन्यष्टवर्षाणि पुण्यवतां भोगस्थानानि साक्षाद्भारतवर्षमेकं कर्मभूमिश्चातुर्वर्ण्ययुतम् ८ तत्रैव कर्म्मभिः स्वर्गं कृतैः प्राप्स्यन्ति मानवाः । मुक्तिश्चात्रैव निष्कामैः प्राप्यते ज्ञानकर्मभिः ९ अधोगतिमितो विप्र यान्ति वै पापकारिणः । ये पापकारिणस्तान् विद्धि पातालतले नरके कोटिसमन्वितान् १० अथ सप्तकुलपर्वताः कथ्यन्ते । माहेन्द्रः मलयः शुक्तिमान् ऋश्यमूकः सह्यपर्वतः विन्ध्यः पारियात्रः । इत्येते भारते कुलपर्वताः ११ नर्मदासुरसाऋषिकुल्याभीमरथीकृष्णावेणीचन्द्रभागाताम्रपर्णी इत्येताः सप्तनद्यः गंगायमुनागोदावरीतुंगभद्राकावेरीसरयूरित्येता महानद्यः पापघ्न्यः १२ जम्बुनाम्ना च विख्यातं जम्बुद्वीपमिदं शुभम् । लक्षयोजनविस्तीर्णमिदं श्रेष्ठं तु भारतम् १३ अक्षद्वीपादिपुण्या जनपदाः निष्कामा ये स्वधर्मेण नरसिंहं यजन्ति ते तत्र निवसन्ति अधिकारक्षयात् मुक्तिं च प्राप्नुवन्ति १४ जम्वाद्याः स्वादूदकान्ताः सप्त पयोधयः । ततः परा हिरण्मयी भूमिः । ततो लोकालोकपर्वतः एष भूर्लोकः १५ अस्योपरि अन्तरिक्षलोकः खेचराणां रम्यस्तदूर्ध्वं स्वर्गलोकः १६ स्वर्गस्थानं महापुण्यं प्रोच्यमानं निबोध मे ॥ भारते कृतपुण्यानां देवानामपि चालयम् १७ मध्ये पृथिव्यामद्रीन्द्रो भास्वान् मेरुर्हिरण्मयः । योजनानां सहस्राणि चतुराशीतिमुच्छ्रितः १८ प्रविष्टः षोडशाधस्ताद्धरिण्यां धरणीधरः । तावत्प्रमाणा पृथिवी पूर्वतश्च समंततः १९ तस्य शृंगत्रयं मूर्ध्नि स्वर्गो यत्र प्रतिष्ठितः । नानाद्रुमलताकीर्णं नाना-

---

१ 'सुखावती' ति 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पुष्पोपशोभितम् २० मध्यमं पश्चिमं पूर्वं मेरोः शृंगाणि त्रीणि वै ॥ मध्यमं स्फाटिकं शृंगं वैडूर्यमणिकामयम् २१ इन्द्रनीलमयं पूर्वं माणिक्यं पश्चिमं स्मृतम् ॥ योजनानां सहस्राणि नियुतानि चतुर्दश २२ उच्छ्रितं मध्यमं शृंगं स्वर्गो यत्र त्रिविष्टपः२३अप्रभान्तरितं शृंगं मूर्ध्नि छत्राकृति स्थितम्। पूर्वमुत्तरशृंगाणां अन्तरं मध्यमस्य च । त्रिविष्टपो नाकपृष्ठे ह्यप्सराः सन्ति निर्वृताः २४ आनन्दोथ प्रमोदश्च स्वर्गशृंगे तु मध्यमे । श्वेतश्च पौष्टिकश्चैव उपशोभनमन्मथौ २५ आह्लादः स्वर्गराजा वै स्वर्गशृंगे तु पश्चिमे । निर्ममो निरहंकारः सौभाग्यश्चातिनिर्मलः २६ स्वर्गाश्चैव द्विजश्रेष्ठ पूर्वशृंगे समास्थिताः । एकविंशानि स्वर्गा वै निविष्टा मेरुमूर्द्धनि २७ अहिंसादानकर्तारो यज्ञानां तपसां तथा । तत्तेषु निवसन्ति स्म जनाः क्रोधविवर्जिताः २८ जलप्रवेशे चानन्दं प्रमोदं वन्हिसाहसे । भृगुप्रपाते सौख्यं च रणं चैवास्य निर्मलम् २९ अनाशके तु संन्यासे मृतो गच्छेत्त्रिविष्टपम् । क्रतुयाजी नाकपृष्ठं अग्निहोत्री च निर्वृतिम् ३० तडागकूपकर्त्ता च लभते पौष्टिकं द्विजः । सुवर्णदायी सौभाग्यं लभन्स्वर्गतपःफलम् ३१ शीतकाले महावन्हिं प्रज्वालयति यो नरः । सर्वसत्त्वहितार्थाय स्वर्गं सोप्सरसं लभेत् ३२ हिरण्यगोप्रदाने हि निरहंकारमाप्नुयात् भूमिदानेन शुद्धेन लभते शान्तिकं पदम् ३३ रौप्यदानेन स्वर्गं तु निर्मलं लभते नरः । अश्वदाननेन पुण्याहं कन्यादानेन मंगलम् ३४ द्विजेभ्यस्तर्पणं कृत्वा दत्वा वस्त्राणि भक्तितः ॥ श्वेतं तु लभते स्वर्गं यत्र गत्वा न शोचते ३५ कपिलागोप्रदानेन परमार्थे महीयते । गोवृषस्य प्रदानेन स्वर्गं मन्मथमाप्नुयात् ३६ माघमासे सरित्स्नायी तिलधेनुप्रदस्तथा ॥ छत्रोपानहदाता च स्वर्गं यात्युपशोभनम् ३७ देवतायतनं कृत्वा द्विजशुश्रूषकस्त-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

या । तीर्थयात्रापरश्चैव स्वर्गराजे महीयते ३८ एकान्नभोजी यो मर्त्यो नक्तभोगी च वित्यशः । उपवासी त्रिरात्राद्यैः शान्तः स्वर्गं शुभं लभेत् ३९ सरित्स्नायी जितक्रोधो ब्रह्मचारी दृढव्रतः । निर्मलं स्वर्गमाप्नोति यथाभूतहिते रतः ४० विद्यादानेन मेधावी निरहंकारमाप्नुयात् । येन येन हिभावेन यद्यद्दानं प्रयच्छति ४१ तत्तत्स्वर्गमवाप्नोति यद्यदिच्छति मानवः । चत्वारि अतिदानानि कन्या गौर्भूः सरस्वती ४२ नरकादुद्धरन्त्येते जपवाहनदोहनात् । यस्तु सर्वाणि दानानि ब्राह्मणेभ्यः प्रयच्छति ४३ संप्राप्य न निवर्तेत स्वर्गं शान्तमनामयम् । शृंगे तु पश्चिमे यत्र ब्रह्मा तत्र स्थितः स्वयम् ४४ पूर्वशृंगे स्वयं विष्णुः मध्ये चैव शिवः स्थितः । अतः परं तु विप्रेन्द्र स्वर्गाख्यानमिमं शृणु ४५ विमलं विपुलं शुद्धमुपर्युपरि संस्थितः । प्रथमे तु कुमारस्तु द्वितीये मातरः स्थिताः ४६ तृतीये सिद्धगन्धर्वा तुर्ये विद्याधरा द्विज ॥ पञ्चमे नागराजा च षष्ठे तु विनतासुतः ४७ सप्तमे दिव्यपितरो धर्मराजस्तथाष्टमे ॥ नवमे तु तथा दक्ष आदित्यो दशमे पथि ४८ भूर्लोकाच्छतसाहस्राद्[1]ऊर्ध्वं चरति भास्करः । योजनानां सहस्रे द्वे विष्टम्भनसमं ततः ४९ त्रिगुणं परिणाहेन सूर्यबिम्बं प्रमाणतः । सोमपुर्यां विभावर्यां मध्यान्हे चार्यमा यदा । महेन्द्रस्यामरावत्यां तदा तिष्ठति भास्करः ५० मध्यान्हे त्वमरावत्यां यदा भवति भास्करः । तदा संयमने याम्ये तत्रोद्यंस्तु प्रदृश्यते ५१ मेरुं प्रदक्षिणं कुर्वन् भात्येव सविता सदा । ध्रुवाधारस्तथोत्तिष्ठन् वालिखिल्यादिभिःस्तुतः ५२ इति श्रीनरसिंहपुराणे भूगोलकथने त्रिंशोऽध्यायः ॥ ३० ॥

---

१ 'भूर्लोकाच्छत साहस्रा' दित्यतो 'मध्यान्हेत्वमरावत्यां यदाभवति भास्कर' इत्यन्तो ग्रन्थः 'ग' पुस्तके न ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

# एकत्रिंशोऽध्यायः ।

॥ भरद्वाज उवाच ॥

कोसौ ध्रुवः कस्य सुतः सूर्याधारोऽभवत्कथम् ॥
विचिन्त्य कथयाशु त्वं सूत जीव समाः शतम् ॥ १ ॥

॥ सूत उवाच ॥

मनोः स्वायम्भुवस्यासीदुत्तानचरणः सुतः । तस्य क्षितिपतेर्विप्रद्वौ सुतौ संबभूवतुः १ सुरुच्यामुत्तमो ज्येष्ठः सुनीत्यां तु ध्रुवोपरः । मध्येसभं नरपतेरुपविष्टस्य चैकदा २ सुनीत्या राजसेवायै नियुक्तोलंकृतः सुतः । ध्रुवो धात्रेयिकापुत्रैः समं विनयतत्परः ३ स गत्वोत्तानचरणं क्षोणीशं प्रणनामह । दृष्ट्वोत्तमं तदुत्संगे निविष्टं जनकस्य वै ४ प्राप्य सिंहासनस्थं च नृपतिं बालचापलात् । आरुरुक्षुमवेक्ष्यामुं सुरुचिर्ध्रुवमब्रवीत् ५ दौर्भेयकिमारोढुमिच्छेरंकं महीपतेः । बाल बालिशबुद्धित्वादभाग्याजाठरोद्भवः ६ अस्मिन् सिंहासने स्थातुं सुकृतं किं त्वया कृतम् ७ यदि स्यात्सुकृतं तत्किंदुर्भाग्योदरगोऽभवः । अनेनैवानुमानेन बुध्यस्व स्वल्पपुण्यताम् ८ भूत्वा राजकुमारोपि नालं कुर्या ममोदरम् । सुकुक्षिजममुं पश्य त्वमुत्तममनुत्तमम् ९ अधिजानुधराजानेर्मानेन परिबृंहितम् ।

॥ सूत उवाच ॥

मध्येराजसभं बालस्तयेति परिभर्त्सितः १० निपतन्नेत्रबाष्पाम्बु धैर्यात्किंचिन्नचोक्तवान् । उचितं नोचितं किंचित् नोचिवान् सोपि पार्थिवः ११ नियन्त्रितो महिष्याश्च तस्याः सौभाग्यगौरवात् । विसर्जितसभालोकं शोकं संहृत्य चेष्टितैः १२

---

१ अयं त्रिंशोध्यायो ( ध्रुवाख्यानं ] ‘ग’ पुस्तके न विद्यते । अध्यायसमाप्तिश्च ‘क’ पुस्तके न । २ ‘सिंहासने नरपते, रिति’ ‘ख’ पुस्तके पाठः । ३ ‘प्रोच्य’ इति पाठो ‘ख’ पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

शैशवैः स शिशुर्नत्वा नृपं स्वसदनं ययौ । सुनीतिर्नीतिनिलयमवलोक्याथ बालकम् १३ मुखलक्ष्म्यैव चाज्ञासीत् ध्रुवं राज्ञापमानितम् । अथ दृष्ट्वा सुनीतिं तु रहोन्तःपुरवासिनीम् १४ आलिंग्य दीर्घं निःश्वस्य मुक्तकण्ठं रुरोद ह । सान्त्वयित्वा सुनीतिस्तं वदनं परिमार्ज्य च ॥ दुकूलाञ्चलसंपर्कैर्वीज्य तं मृदुपाणिना ॥ पप्रच्छ तनयं माता वद रोदनकारणम् १५ विद्यमाने नरपतौ शिशो केनापमानितः ।

॥ ध्रुव उवाच ॥

संपृच्छे जननि त्वाहं सम्यक् शंस ममाग्रतः १६ भार्यात्वेपि च सामान्ये कथं सा सुरुचिः प्रिया । कथं न भवती मातः प्रिया क्षितिपतेरसि १७ कथमुत्तमतां प्राप्त उत्तमः सुरुचेः सुतः । कुमारत्वेपि सामान्ये कथं चाहमनुत्तमः १८ कथं त्वं मन्दभाग्यासि सुकुक्षिः सुरुचिः कथम् । कथं नृपासनं योग्यमुत्तमस्य कथं न मे १९ कथं मे सुकृतं तुच्छमुत्तमस्योत्तमं कथम् । इति श्रुत्वा वचस्तस्य सुनीतिर्नीतिमच्छिशोः २० किंचिदुच्छ्वस्यशनकैः शिशुशोकोपशान्तये । स्वभावमधुरां वाणीं वक्तुं समुपचक्रमे २१

॥ सुनीतिरुवाच ॥

अयि तात महाबुद्धे विशुद्धेनान्तरात्मना । निवेदयामि ते सर्वं मावमाने मतिं कृथाः २२ तया यदुक्तं तत्सर्वं तथ्यमेव न चान्यथा । यदि सा महिषी राज्ञो राज्ञीनामतिवल्लभा २३ महासुकृतसंभारैरुत्तमश्चोत्तमोदरे । उवास तस्याः पुण्यायाः नृपसिंहासनोचितः २४ आतपत्रं च चन्द्राभं शुभे चापि हि चामरे । भद्रासनं तथोच्चं च सिन्धुराश्च मदोत्कटाः २५ तुरङ्गमाश्च तुरगा अनाधिव्याधिजीवितम् । निःसपत्नं शुभं राज्यं प्राप्यं विष्णुप्रसादतः २६

---

१ परिरबार्यं प्रसरा इति क पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ सूत उवाच ॥

इत्याकर्ण्य सुनीत्यास्तत् मातुर्वाक्यमनिन्दितम् ।
सौनीतेयो ध्रुवो वाचमाददे वक्तुमुत्तरम् २७

॥ ध्रुव उवाच ॥

जनयित्रि सुनीते मे शृणु वाक्यमनाकुलम् । उत्तानचरणाद-न्यन्नास्तीति मे मतिः शुभे २८ सिद्धार्थोस्म्यम्ब यद्यस्ति क-श्चिदाश्रितकामधुक् । अद्यैव सकलाराध्यं तमाराध्य जगत्प-तिम् २९ तत्तदासादितं विद्धि पदमन्यैर्दुरासदम् । एकमेव हि साहाय्यं मातर्मे कर्तुमर्हसि ३० अनुज्ञां देहि मे विष्णुं यथा त्वा-राधयाम्यहम् ।

॥ सुनीतिरुवाच ॥

अनुज्ञातुं न शक्नोमि त्वामुत्तानशयाङ्गज ३१
सप्ताष्टवर्षदेशीय क्रीडायोग्योसि पुत्रक ।
त्वदेकतनया तात त्वदाधारैकजीविता ३२
लब्धोसि कतिभिः कष्टैरिष्टाः संप्रार्थ्य देवताः ।
यदा यदा बहिर्यासि रन्तुं त्रिचतुरं पदम् ३३
तदा तदा मम प्राणस्तात त्वामुपगच्छति ।

॥ ध्रुव उवाच ॥

अद्य यावत् पिता माता त्वं चोत्तानपदो विभुः ।
अद्य प्रभृति मे माता पिता विष्णुर्न संशयः ३४

॥ सुनीतिरुवाच ॥

विष्णोराराधने नाहं वारये त्वां सुपुत्रक । जिव्हा मे श-तधा याति यदि त्वां वारयामि भोः ३५ इत्यनुज्ञामिव प्राप्य जननीचरणाम्बुजैः । परिक्रम्य प्रणम्याथ तपसे च ध्रुवो ययौ ३६ तयापि धैर्यसूत्रेण सुनीत्या परिगुम्फ्य च । तत्रेन्दीवरजा माला ध्रुवस्योपायनीकृता ३७ मात्रा तन्मार्गरक्षार्थं तदा तदनुगी-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

कृताः । परैराचार्यप्रवराः स्वाशीर्वादाः परं शतम् ३८ सर्वत्रावतु ते पुत्रशंखचक्रगदाधरः । नारायणो जगद्व्यापी प्रभुः कारुण्यवारिधिः ३९

॥ सूत उवाच ॥

स्वसौधात् स विनिर्गत्य बालो ऽबालपराक्रमः । अनुकूलेन मरुता दर्शिताध्वाविशद्वनम् ४० स मातृदैवतोभिज्ञः केवलं राजवर्त्मनि । न वेद काननाध्वानं क्षणं दध्यौ नृपात्मजः ४१ पुरोपवनमासाद्य चिन्तयामास सोऽर्भकः । किं करोमि क्व गच्छामि को मे साहाय्यदो भवेत् ४२ एवमुन्मील्य नयने यावत्पश्यति स ध्रुवः । तावद्ददर्श सप्तर्षीन् अतर्कितगतीन्वने ४३ अथ दृष्ट्वा स सप्तर्षीन् सप्तसप्ततितेजसः । भाग्यसूत्रैरिवाकृष्योपनीतान् प्रमुमोद ह ४४ तिलकाङ्कितसद्भालान् कुशोपग्रहिताङ्गुलीन् । कृष्णाजिनोपविष्टांश्च ब्रह्मसूत्रैरलंकृतान् ४५ उपगम्य विनम्रांसः प्रबद्धकरसम्पुटः । ध्रुवो विज्ञापयांचक्रे प्रणम्य ललितं वचः ४६

॥ ध्रुव उवाच ॥

अवैत मां मुनिवराः सुनीत्युदरसम्भवम् ।
उत्तानपादतनयं ध्रुवं निर्विण्णमानसम् ४७

॥ सूत उवाच ॥

तं दृष्ट्वोर्जस्वलं बालं स्वभावमधुराकृतिम् ।
अनर्घ्यनयनेपथ्यं मृदुगम्भीरभाषिणम् ४८
उपोपवेश्य शिशुकं प्रोचुस्ते विस्मिता भृशम् ।
तवाद्यापि न जानीमो वत्स निर्वेदकारणम् ४९
अनवाप्ताभिलाषाणां वैराग्यं जायते नृणाम् ।
सप्तद्वीपपते राज्ञः कुमारस्त्वं तथा कथम् ५०
किमस्माभिरहो कार्यं कस्तवास्ति मनोरथः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ ध्रुव उवाच ॥

मुनयो मम यो बन्धुरुत्तमश्चोत्तमोत्तमः ५१

पित्रा प्रदत्तं तस्यास्तु तद्भद्रासनमुत्तमम् ।
भवत्कृतं हि साहाय्यं एतदिच्छामि सुव्रताः ५२

अनन्यनृपभुक्तं यत् यदन्येभ्यः समुच्छ्रितम् ।
इन्द्रादिदुरवापं यत् कथं लभ्येत तत्पदम् ५३

इति श्रुत्वा वचस्तस्य मुनयो बालकस्य तु ।
यथार्थमेव प्रत्यूचुर्मरीच्याद्यास्तदा ध्रुवम् ५४

॥ मरीचिरुवाच ॥

अनास्वादितगोविन्दपदाम्बुजरजोरसः ।
मनोरथपथातीतं स्फीतं नाकलयेत्फलम् ५५

॥ अत्रिरुवाच ॥

अनर्चिताच्युतपदः पदमासाद्यते कथम् ।
इन्द्रादिदुरवापं यन्मानवैः सुदुरासदम् ५६

॥ अङ्गिरा उवाच ॥

न हि दूरे पदं तस्य सर्वासां सम्पदामिह ।
कमलाकान्तकान्ताङ्घ्रिकमलं यः सुशीलयेत् ५७

॥ पुलस्त्य उवाच ॥

यस्य स्मरणमात्रेण महापातकसन्ततिः ।
परमान्तकमाप्नोति स विष्णुः सर्वदो ध्रुवः ५८

॥ पुलह उवाच ॥

यदाहुः परमं ब्रह्म प्रधानपुरुषात्परम् ।
यन्मायया कृतं सर्वं स विष्णुः कीर्तितोऽर्थदः ५९

॥ क्रतुरुवाच ॥

यो यज्ञपुरुषो विष्णुर्वेदवेद्यो जनार्दनः ।
अन्तरात्मास्य जगतः स तुष्टः किं न यच्छति ६०

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ वसिष्ठ उवाच ॥

यद्भ्रूनर्तनवर्तिन्यः सिद्धयोष्टौ नृपात्मज ।
तमाराध्य हृषीकेशं चतुर्वर्गो न दूरतः ६१

॥ ध्रुव उवाच ॥

सत्यमुक्तं द्विजेन्द्रा वो विष्णोराराधनं प्रति ।
कथं स भगवानीज्यः सविधिश्चोपदिश्यताम् ६२
प्रभूतदो भवेद्यो वै दुराराध्यतमो भवेत् ।
बालोहं राजपुत्रोहं दुःखं नैव मया क्षमम् ६३

॥ मुनयऊचुः ॥

तिष्ठता गच्छता वापि स्वपता जाग्रता तथा ।
शयानेनोपविष्टेन वेद्यो नारायणः सदा ६४
पुत्रान् कलत्रं मित्राणि राज्यं स्वर्गापवर्गकम् ।
वासुदेवं जपन्मर्त्यः सर्वं प्राप्नोत्यसंशयम् ६५
द्वादशाक्षरमन्त्रेण वासुदेवात्मकेन च ।
ध्यायंश्चतुर्भुजं विष्णुं जप्वा सिद्धिं नको गतः ६६
पितामहेन चाप्येष महामन्त्र उपासितः ।
मनुना राज्यकामेन वैष्णवेन नृपात्मज ६७
त्वमप्येतेन मन्त्रेण वासुदेवपरो भव ।
यथाभिलषितामृद्धिं क्षिप्रं प्राप्स्यसि सत्तम ६८
इत्युक्त्वान्तर्हिताः सर्वे महात्मानो मुनीश्वराः ।
वासुदेवमना भूत्वा ध्रुवोपि तपसे ययौ ६९

॥ सूत उवाच ॥

ध्रुवः सर्वार्थदं मन्त्रं जपन् मधुवने तपः । स चक्रे यमुनातीरे मुनिदिष्टेन वर्त्मना ७० श्रद्धान्वितेन जपता च तपःप्रभावात् साक्षादिवाब्जनयनं ददृशे हृदीशम् । दिव्याकृतिं सपदि तेन

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ततः स एव हर्षात्पुनः सं जजाप नृपात्मभूतः ७१ क्षुत्तर्षवर्ष-घनवातमहोष्णतादिशारीरदुःखाकुलमस्य न किञ्चनाभूत् ॥ मग्न-मनस्यनुपमेयसुखाम्बुराशौ राज्ञः शिशुर्नचविवेदशरीरवार्ताम् ७२ विघ्नाश्च तस्य किल देव शङ्कितसृष्टाः बालस्य तीव्रतपसो विफला बभूवुः ७३ शीतातपादिरिव विष्णुमयं मुनिं हि प्रादे-शिका न खलु धर्षयितुं क्षमन्ते । अथ भक्तजनप्रियः प्रभुः शिशुना ध्यानबलेन तोषितः ७४ वरदः पतगेन्द्रवाहनो हरि-रागात् स्वजनं तमीक्षितुम् । मणिपिण्डारकमौलिराजितो विल-सद्रत्नमहाघनच्छविः ७५ स बभावुदयाद्रिमत्सराद्धृतबालार्क इवासिताचलः । स राजसूनुं तपसिस्थितं तं ध्रुवं ध्रुवस्निग्धदृगि-त्युवाच ७६ दन्तांशुसंङ्घैरमितप्रवाहैः प्रक्षालयन्रेणुमिवास्य गात्रे । वरं वरं वत्स वृणीष्व यस्ते मनोगतस्त्वत्तपसास्मि तुष्टः । ध्यानेन ते चेन्द्रियनिग्रहेण मनोनिरोधेन च दुष्करेण । शृण्वन्वचस्तत्सकलं गभीरमुन्मीलिताक्षः सहसा ददर्श ७७ स्वे चिन्त्यमानं त्विदमव मूर्तं पुरःस्थितं ब्रह्म चतुर्भुजं सः । दृष्ट्वा क्षणं राजसुतः सुपूज्यं पुत्रस्त्रयीशं किमिह ब्रवीमि ७८ किं वा करोमीति ससंभ्रमः स तु नचाब्रवीत् किंचन नो चकार । हर्षाश्रुपूर्णः पुलकाचिताङ्गस्त्रिलोकनाथेति वदन्नथोच्चैः ७९ दण्डप्रणामाय पपात भूमौ प्रवेपमानश्च हरेः पुरः स हि । दण्डवत्प्रणिपत्याथ परितः परिलुण्ठ्य च ८० रुरोद हर्षेण चिरं दृष्ट्वा तं जगतो गुरुम् । नारदेन सनन्देन सनकेन च संश्रुतम् । अन्यैः सनत्कुमाराद्यैर्योगिभिर्योगिनां वरम् ८१ कारुण्यबाष्पनीरार्द्रं पुण्डरीकविलोचनम् । ध्रुवमुत्थापयांचक्रे चक्री धृत्वा करेण तम् ८२ हरिस्तु परिपस्पर्श तदङ्गं धूलिधू-सरम् । कराभ्यां कोमलाभ्यां स परिष्वज्याह तं हरिः ८३

१ 'प्रजजाप' इति 'ख' पुस्तके । २ किल 'देवविशपसृष्टा' इति 'क' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वरं वरय भो बाल यत्ते मनसि वर्त्तते । तद्ददामि न संदेहो नादेयं विद्यते तव ८४ ततो वरं राजशिशुर्ययाचे विष्णुं वरं ते स्तवशक्तिमेव । तं मूर्तिविज्ञाननिभेन देवः पस्पर्श शंखेन मुखेऽमलेन ८५ अथ सुरमुनिदत्तज्ञानचन्द्रेण सम्यक् विमलितमिव चित्तं पूर्णमेव ध्रुवस्य । त्रिभुवनगुरुशंखस्पर्शजज्ञानभानान्तुदयति नितरांतः साधु तुष्टाव हृष्टः ८६

ध्रुव उवाच ।

अखिलमुनिजननिवहनमितचरणः । खरकदनकरः । चपल चरितः । देवाराधितपादजलः । सजलजलधरश्यामशमितःसौभपतिमाल्यधामा । अभिरामरामातिविनय[1]कृतनवरसरसापहतेन्द्रियसुररमणीविहितान्तःकरणानन्दः ॥ अनादिनिधनः अधननिजधिजमित्रोद्धरणधीरः । अवधारितसुरनाथनाथितविपक्षपक्षः। ऋक्षराजबिलप्रवेशापहतस्यमन्तकापमार्ज्जितनिजापवाददुरितकृतत्रैलोक्यभारः। द्वारकावासनिरतः ॥ स्वरितमधुरवेणुवादनश्रवणामृतप्रकटितातीन्द्रियज्ञानः । यमुनातटचरःद्विजधेनुमृगगणैस्त्यक्तनिजनिजाहारः ॥ संसारदुस्तरपारावारसमुत्तारणांघ्रिपोतः स्वप्रतापानलहुतकालयवनः । वनमालाधरवरमणिकुण्डलालंकृतश्रवणः । नानाप्रसिद्धाभिधानः ॥ निगमविबुधमुनिजनवचनमनोचरः । कनकपिशङ्गकौशेयवासोभगवान् भृगुपदकौस्तुभविभूषितोरःस्थलः ॥ स्वदयिताक्रूरनिजजननीगोकुलपालकचतुर्भुजशंखचक्रगदापद्मतुलसीनवदलदामहारकेयूरकटकमुकुटालंकृतः । सुनन्दनादिभागवतोपासितविश्वरूपः ॥ पुराणपुरुषोत्तमः उत्तमश्लोकः लोकावासो वासुदेवः ॥ श्रीदेवकीजठरसंभूतः । भूतपतिविरञ्चिनतचरणारविन्दः वृन्दावनकृतकेलिगोपिकाजनश्रमापहः ॥ सततंसम्पादितसुजनकामः । कुन्दनिभशं-

---

१ अभिरामातिविनय इति 'क' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

खधरमिन्दुनिभवक्त्रं सुन्दरसुदर्शनमुदारतरहासं विद्वज्जनवन्दितमिदं ते रूपमतिहृद्यमखिलेश्वर नतोस्मि ॥ स्थानाभिकामी तपसि स्थितोहं त्वां दृष्टवान् साधुमुनीन्द्रगुह्यम् । काचं विचिन्वन्निव दिव्यरत्नं स्वामिन्न कृतार्थोस्मि वरान्न याचे ८७ अपूर्वदृष्टे तव पादपद्मे दृष्ट्वा दृढं नाथ न हि त्यजामि ॥ कामान्न याचे स हि कोपि मूढो यः कल्पवृक्षात्तुषमात्रमिच्छेत् ८८ त्वां मोक्षबीजं शरणं प्रपन्नः शक्नोमि भोक्तुं न बहिःसुखानि ॥ रत्नाकरे देव सति स्वनाथे विभूषणं कांचनमयं न युक्तम् ८९ अतो न याचे वरमीश युष्मत्पादाब्जभक्तिं सततं ममास्तु ॥ इमं वरं देववर प्रयच्छ पुनः पुनस्त्वामिदमेव याचे ९०

॥ श्रीसूत उवाच ॥

इत्यात्मसंदर्शनलब्धदिव्यज्ञानं गदंस्तं भगवान् जगाद ९१

॥ श्रीभगवानुवाच ॥

आराध्य विष्णुं किमनेन लब्धं मा भूज्जनेपीत्थमसाधुवादः । स्थानं परं प्राप्नुहि यन्मतं ते कालेन मां प्राप्स्यसि शुद्धभावः ९२ आधारभूतः सकलग्रहाणां कल्पद्रुमः सर्वजनैश्च वन्द्य ॥ मम प्रसादात्तव सा च माता ममान्तिके यास्य सुनीतिरार्या ९३

॥ श्रीसूत उवाच ॥

तं साधयित्वेति वरैर्मुकुन्दः स्वमालयं दृश्यवपुर्जगाम ॥ त्यक्त्वा शनैर्दिव्यवपुः स्वभक्तं मुहुः परावृत्य समीक्षमाणः ९४ तावच्च सद्यः सुरसिद्धसंघः श्रीविष्णुतद्भक्तसमागमं तम् । दृष्ट्वाथ वर्षन् सुरपुष्पवृष्टिं तुष्टाव हर्षाद् ध्रुवमव्ययं च ९५ श्रियाभिमत्याच सुनीतिसूनुर्विभाति देवैरपि वन्द्यमानः । योयं नृणां कीर्तनदर्शनाभ्यामायुर्यशो वर्धयति श्रियं च ९६ इत्थं ध्रुवः प्राप पदं दुरापं हरेः प्रसादान्न च चित्रमेतत् । तस्मिन् प्रसन्ने द्विजराजपत्रौ न दुर्लभं भक्तजनेषु किंचित् ९७ सूर्यमण्डलमानात्तु

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

द्विगुणं सोममण्डलात् । पूर्णे शतसहस्रे द्वे तस्मान्नक्षत्रमण्डलम् ९८ द्विलक्षेपि बुधस्यापि स्थानं नक्षत्रमण्डलम् । तावत्प्रमाणभागे तु बुधस्याप्युशना स्थितः । अङ्गारकोपि शुक्रस्य तावन्माने व्यवस्थितः ९९ लक्षद्वये तु भौमस्य स्थितो देवपुरोहितः । सौरिर्बृहस्पतेश्चोर्ध्वं द्विलक्षे तु व्यवस्थितः १०० तस्माच्छनैश्चरादूर्ध्वं लक्षे सप्तर्षिमण्डलम् । सप्तर्षिमण्डलादूर्ध्वमेकं लक्षं ध्रुवः स्थितः । मेढीभूतः समस्तस्य ज्योतिश्चक्रस्य सत्तमः १ स्वभावात् तपति विप्रेन्द्र अधश्चोर्ध्वं च रश्मिभिः । कालसंख्यां त्रिलोकस्य स करोति युगेयुगे २ जनस्तपस्तथा सत्य एतान् लोकान् द्विजोत्तम । ब्रह्मणा मुनिशार्दूल विष्णुभक्तिविवर्धितः ॥ ऊर्ध्वंगतैर्द्विजश्रेष्ठ रश्मिभिस्तपते रविः । अधोगतैश्च भूर्लोकं द्योतते दीर्घदीधितिः ३ सर्वपापहरः सूर्यः कर्त्ता त्रिभुवनस्य च । छत्रवद् प्रतिपश्येत मण्डलान्मण्डलं परम् ४ आदित्यमण्डलाधस्तात् भुवर्लोकं प्रतिष्ठितम् । त्रैलोक्यस्येश्वरत्वं च विष्णुदत्तं शतक्रतो ५ लोकपालैः स सहितो लोकान् रक्षति धर्मतः । वसेत् स्वर्गे महाभाग देवेन्द्रः स तु कीर्तिमान् ६ ततोधस्तान्मुने चेदं पातालं विद्धि सप्तभम् । न तत्र तपते सूर्यो न रात्रिर्न निशाकरः । दिव्यस्वरूपमास्थाय तपन्ति सततं जनाः ७ पातालस्था द्विजश्रेष्ठ दीप्यमानान् स्वतेजसा । स्वर्लोकात्तु महर्लोकः कोटिमात्रे व्यवस्थितः ८ ततो योजनमात्रेण द्विगुणोमण्डलेन तु । जनलोकः स्थितो विप्र पंचमो मुनिसेवितः ९ तत्रोपरि तपोलोकश्चतुर्भिः कोटिभिः स्थितः । सत्यलोकोष्टकोटीभिः स्वर्लोकादुपरि स्थितः सर्वे छत्राकृति ज्ञेया भुवनोपरिसंस्थिताः । ब्राह्मलोकाद्विष्णुलोको द्विगुणे च व्यवस्थितः १० वराहे तस्य माहात्म्यं कथितं लोकचिन्तकैः । ततः परं द्विजश्रेष्ठ स्थितः परमपूरुषः ११ ब्रह्माण्डात् परमः साक्षात् निर्लेपः पुरुषः स्थितः । पशुपाशैर्विमुच्येत

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तपोज्ञानसमन्वितः ॥ इति ते संस्थितिः प्रोक्ता भूगोलस्य मयानघ । यस्तु सम्यगिमां वेत्ति स याति परमां गतिम् १२ लोकस्य संस्थानकरोऽप्रमेयो विष्णुर्नृसिंहो नरदेवपूजितः युगेयुगे विष्णुरनादिमूर्तिमान् आस्थाय विश्वं परिपाति दुष्टहा ११३ इति श्रीनरसिंहपुराणे एकत्रिंशोऽध्यायः ३१ ॥ भूगोलकः समाप्तः ॥

## द्वात्रिंशोऽध्यायः ।

॥ भरद्वाज उवाच ॥

सहस्रानीकस्य हरेरवतारस्य शार्ङ्गिणः ॥
साम्प्रतं श्रोतुमिच्छामि तन्मे वद महामते १

॥ सूतउवाच ॥

हन्त ते कथयिष्यामि चरितं तस्य धीमतः । सहस्रानीकस्य हरेरवतारांश्च मे शृणु २ सहस्रानीकोभिषिक्तो निजराज्ये द्विजोत्तमे । पालयास धर्मेण राज्यं स तु नृपात्मजः ३ तस्य पालयतो राज्यं राजपुत्रस्य धीमतः । भक्तिर्बभूव देवेशे नरसिंहे सुरोत्तमे ४ तं द्रष्टुमागतः साक्षाद्विष्णुभक्तं भृगुः पुरा । अर्घ्यपाद्यासनै राजा तमभ्यर्च्याब्रवीदिदम् ५ पावितोहं मुनिश्रेष्ठ सांप्रतं तव दर्शनात् । त्वद्दर्शनमपुण्यानां कलावस्मिन् सुदुर्लभम् ६ नरसिंहं प्रतिष्ठाप्य देवदेवं सनातनम् । आराधयितुमिच्छामि विधानं तत्र मे वद ७ अवतारानशेषांश्च देवदेवस्य चक्रिणः । श्रोतुमिच्छामि सकलांस्तान् पुण्यानपि मे वद ८

॥ भृगुरुवाच ॥

शृणु भूपालपुत्र त्वं नहि कश्चित् कलौ युगे । हरौ भक्तिं करोत्यत्र नृसिंहे चातिभक्तिमान् ९ स्वभावाद्यस्य भक्तिः स्यान्नरसिंहे सुरोत्तमे । तस्यारयः प्रणश्यन्ति कार्यसिद्धिश्च जायते १०

१ इदमर्धं 'ग' पुस्तके न ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

त्वमतीव हरेर्भक्तः पाण्डुवंशेपि सत्तमः। तेन ते निखिलं वक्ष्ये शृणुष्वैकाग्रमानसः ११ यः कुर्याच्छोभनं वेश्म नरसिंहस्य भक्तिमान्। स सर्वपापनिर्मुक्तो विष्णुलोकमवाप्नुयात् १२ प्रतिमां लक्षणोपेतां नरसिंहस्य कारयेत्। स सर्वपापनिर्मुक्तो विष्णुलोकमवाप्नुयात् १३ प्रतिष्ठां नरसिंहस्य यः करोति यथाविधि। निष्कामो नरशार्दूल देहबाधात् प्रमुच्यते १४ नरसिंहं प्रतिष्ठाप्य यः पूजामाचरेन्नरः। तस्य कामाः प्रसिध्यन्ति परमं पदमाप्नुयात् १५ ब्रह्मादयः सुराः सर्वे विष्णुमाराध्य ते पुरा। स्वं स्वं पदमनुप्राप्ताः केशवस्य प्रसादतः १६ ये ये नृपवरा राजन् मान्धातृप्रमुखा नृपाः। ते ते विष्णुं समाराध्य स्वर्गलोकमितो गताः १७ यस्तु पूजयते नित्यं नरसिंहं सुरेश्वरम्। स स्वर्गमोक्षभागी स्यात् नात्र कार्या विचारणा १८ तस्मादेकमना भूत्वा यावज्जीवं प्रतिज्ञया। अर्चनान्नरसिंहस्य प्राप्स्यसे स्वाभिवाञ्छितम्[1] १९ विधिवत्स्थापयेद्यस्तु कारयित्वा जनार्दनम्। नतु निर्गमनं तस्य विष्णुलोकाद्भवेन्नृप २० नरो नृसिंहं तमनन्तविक्रमं सुरासुरैरर्चितपादपङ्कजम्। संस्थाप्य भक्त्या विधिवच्च पूजयेत्प्रयाति साक्षात्परमेश्वरं हरिम् २१

॥ इति श्रीनरसिंहपुराणे सहस्रानीकचरिते द्वात्रिंशोऽध्यायः ॥

## त्रयस्त्रिंशोऽध्यायः।

॥ राजोवाच ॥

हरेरर्चाविधिं पुण्यां श्रोतुमिच्छामि तत्त्वतः। त्वत्प्रसादाद्विशेषेण भगवन् प्रब्रवीहि मे १ संमार्ज्जनकरो यश्च नरसिंहस्य मन्दिरे। यत्पुण्यं लभते तद्वदुपलेपनकृन्नरः २ शुद्धोदकेन यत्पुण्यं स्नापिते केशवे भवेत्। क्षीरस्नानेन यत्पुण्यं दध्ना च

---

१ 'संप्राप्नोत्यभिवाञ्छितम्' इति 'ग' पुस्तके पाठः।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मधुना तथा । घृतस्नानेन यत्पुण्यं पंचगव्येन यद्भवेत् ३ क्षालिते चोष्णतोयेन प्रतिमायां च भक्तितः । "[1]विल्वपत्रैश्च यत्नेन मर्दिते यश्च पीठके । उद्वर्तनात्परंस्नानं कुशपुष्पोदकेन च । हेमरत्नाम्बुभिर्यच्च यच्च गन्धोदकेन च" । कर्पूरागरुतोयेन मिश्रेण स्नापितेन च ४ अर्घ्यदानेन यत्पुण्यं पाद्याचमनदानके । मन्त्रेण स्नापिते यच्च वस्त्रदानेन यद्भवेत् ५ श्रीखण्डकुंकुमाभ्यां तु अर्चिते किं फलं भवेत् । पुष्पैरभ्यर्चिते यच्च यत्फलं धूपदीपयोः ६ नैवेद्यैर्यत्फलं प्रोक्तं प्रदक्षिणकृते तु यत् । नमस्कारकृते यच्च फलं यत्स्तोत्रगीतयोः ७ तालवृन्तप्रदानेन चामरस्य च यद्भवेत् । ध्वजप्रदाने यद्विष्णोः शंखदानेन यद्भवेत् ८ एतच्चान्यच्च यत्किंचित् अज्ञानान्न प्रचोदितम् । तत्सर्वं कथय ब्रह्मन् भक्तस्य मम केशवे ९

॥ सूत उवाच ॥

इति संप्रेरितो विप्रस्तेन राज्ञा भृगुस्तदा । मार्कण्डेयं नियुज्याथ कथने स गतो मुनिः १० सोपि तस्मिन्मुदायुक्तो हरिभ[3]क्त्या विशेषतः । राज्ञे प्रवक्तुमारेभे भृगुणा चोदितो मुनिः ११

॥ मार्कण्डेय उवाच ॥

राजपुत्र [4]शृणुष्वेदं हरिपूजाविधिं क्रमात् । विष्णुभक्तस्य वक्ष्यामि तवाहं पाण्डुवंशज १२ नरसिंहस्य नित्यं च यः संमार्जनमारभेत् । सर्वपापविनिर्मुक्तो विष्णुलोके स मोदते १३ गोमयेन मृदा तोयैर्यः करोत्युपलेपनम् । स चाक्षय्यफलं प्राप्य विष्णुलोके महीयते १४ '[5]अत्रार्थे यत्पुरावृत्तमितिहासं पुरात-

---

१ विल्वपत्रैश्चेति सार्धश्लोकोयं 'कख' पुस्तकयोर्न । २ 'फलं वस्त्रोपवीतयोः' इति 'कख' पुस्तकयोः पाठः । ३ 'हरिभक्तौ विशेषतः' इति 'ख' पुस्तके पाठः । ४ 'कुरुष्वेदं' इति 'ग' पुस्तके पाठः । ५ 'अत्रार्थे' इत्याद्यारभ्याध्यायपरिसमाप्तेर्नेयं कथा 'ग' पुस्तके । 'कख' पुस्तकयोस्तु साम्यतया विद्यते ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नम् । यत्कृत्वा सर्वपापेभ्यो मुक्तिर्भवति सत्तम १५ पुरा युधिष्ठिरो राजा पञ्चभिर्भ्रातृभिर्युतः । द्रौपद्या सह राजेन्द्र काननं विचचार ह १६ शूलकण्टकनिष्क्रान्तास्ततस्ते पंच पाण्डवाः । नारदोपि गतो नाकं जुष्ट्वेदं तीर्थमुत्तमम् १७ ततो युधिष्ठिरो राजा प्रस्थितस्तीर्थमुत्तमम् । दर्शनं मुनिमुख्यस्य तीर्थधर्मोपदेशिनः १८ चिन्तयति च धर्मात्मा क्रोध पैशून्यवर्जितः । दानवो बहुरोमा च तथा स्थूलशिरा नृप १९ पाडण्वान् गच्छतो वीक्ष्य दानवो द्रौपदीच्छया । कृत्वा भूप मुने रूपं बहुरोमा गतस्तदा२० प्रणिधानं विधायाथ आसीनः कुशविष्टरे । बिभ्रत् कमण्डलुं पार्श्वे दर्भसूचीं तथा करे २१ अक्षमालां जपन्मन्त्रं स्वनासाग्रं निरीक्षयत् । स दृष्टः पाण्डवैस्तत्र रेवायां वनचारिभिः २२ ततो युधिष्ठिरो राजा तं प्रणम्य सहानुजः । जगाद वचनं दृष्ट्वा भाग्येनासि महामुने २३ तीर्थानि रुद्रदेहायाः सुगोप्यानि निवेदय । मुनीनां दर्शनंनाथ श्रुतं धर्मोपदेशकम् २४ यावन्मुनिमुवाचेदं धर्मपुत्रो युधिष्ठिरः । तावत्स्थूलशिराः प्राप्तो मुनिरूपधरोऽपरः २५ जल्पन्नित्यातुरं वाक्यं को नामस्तत्र रक्षकः । भयातुरं नरो जीवं यो रक्षेच्छरणागतम् २६ तस्यानन्तफलं स्याद्वै किं पुनर्मां द्विजोत्तमम् । एकतो मेदिनीदानं मेरुभूधरदक्षिणम् २७ अन्यतोह्यार्तजीवानां प्राणसंशयकारणम् । द्विजं धेनुं स्त्रियं बालं पीड्यमानं च दुर्ज्जनैः २८ उपेक्षेत नरो यस्तु स च गच्छति रौरवम् । अथ मां हृतसर्वस्वं प्राणत्यागपरायणम् २९ को रक्षति नरो वीरः पराभूतं हि दानवैः । गृहीत्वा चाक्षमालां मे तथा शुभकमण्डलुम् ३० निहतोहं कराघातैः तथा खाटो मनोहरः । गृहीतं मम सर्वस्वं दानवेन दुरात्मना ३१ इत्याकर्ण्य वचः क्लीबं पाण्डवा जातसंभ्रमाः । यान्ति रोमाश्रिता भूयो विधायाग्निं च तं मुनिः ३२ विमुच्य द्रौपदीं तत्र

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मुनेः पार्श्वे महात्मनः। ततो दूरतरं प्राप्ताः संरम्भात्ते च पाण्डवाः ३३ ततो युधिष्ठिरोऽवोचत् किंच नो नात्र दृश्यते। कृष्णासंरक्षणार्थाय व्रजध्वावर्स्तं चार्जुन ३४ ततोऽर्जुनो विनिष्क्रान्तो बन्धुवाक्यप्रणोदितः। ततो युधिष्ठिरो राज सत्यां वाचमकल्पात् ३५ निरीक्ष्य मण्डलं भानोस्तदा सुगहने वने। मम सत्त्वाच्च सुकृतात् धर्मसम्भाषणात् प्रभो ३६ तथ्यं शंसन्तु त्रिदशा मम संशयभाजिनः। ततोम्बरेऽभवद्वाणी तदा भूपाशरीरिणी ३७ दानवोयं महाराज मुनिः स्थूलशिराः स्थितः। नासावुपद्रुतः केन मायैषास्य दुरात्मनः ३८ ततो भीमः कराघातैर्नश्यमानं हि दानवम्। संरम्भात्कुपितोत्यर्थं मौलिदेशे जघान तम् ३९ सोपि रूपं निजं प्राप्य रौद्रं भीममताडयत्। तत्र युद्धं प्रववृते दारुणं भीमदैत्ययोः ४० कष्टाद्बभञ्ज भीमोपि तस्यस्थूलं शिरो वने। अर्जुनोऽपि समायातो नैव पश्यति तं मुनिम् ४१ तथा च द्रौपदीं भूयः साध्वीं कान्तां च वल्लभाम्। ततो वृक्षं समारुह्य यावत्पश्यति चार्जुनः ४२ तावद्विधाय तां स्कन्धे शीघ्रं धावति दानवः। संहृता याति दुष्टेन रुदती कुररी यथा ४३ कुर्वती भीमभीमेति धर्मपुत्रेति वादिनी। तां दृष्ट्वा स ययौ वीरः शब्दैः सन्नादयन् दिशः ४४ पादन्यासोरुवेगेन प्रभग्ना पादपा भृशम्। ततो दैत्यो पि तां तन्वीं विहायाशु पलायितः ४५ तथापि चार्जुनो तस्य कोपान्मुञ्चति नासुरम्। ततो दैत्योऽपि तां तन्वीं विहायाशु पलायितः ४६ पतितो मेदिनीपृष्ठे तावदेव चतुर्भुजः। पीते च वाससी बिभ्रत् शंखचक्रायुधानिच ४७ ततः स विस्मयाक्रान्तो नत्वा पार्थो वचोवदत्।

॥ अर्जुन उवाच ॥

कथं कृतैषा भगवंस्त्वया मायात्र वैष्णवी ४८ मयाप्यपकृतं



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नाथ तत्क्षमस्व नमोस्तुते । नूनमज्ञानभावेन कर्मैतद्दारुणं मया
४९ तत्क्षन्तव्यं जगन्नाथ चैतन्यं मानवे कुतः ।

॥ चतुर्भुज उवाच ॥

नाहं कृष्णो महाबाहो बहुरोमास्मि दानवः ५०
उपयातो हरेर्देहं पूर्वकर्मप्रभावतः ।

॥ अर्जुन उवाच ॥

बहुरोमन् पूर्वजातिं कर्म मे शंस तत्त्वतः ५१
केन कर्मविपाकेन विष्णोः सारूप्यमाप्तवान् ।

॥ चतुर्भुज उवाच ॥

शृण्वर्जुन महाभाग सहितो भ्रातृभिर्मम ५२ चरितं चित्रम-त्यर्थं शृण्वतां मुदवर्धनम् । अहमासं पुरा राजा सोमवंशसमुद्भवः ५३ जयध्वज इति ख्यातो नारायणपरायणः । विष्णोर्देवालये नित्यं संमार्जनपरायणः ५४ उपलेपरतश्चैव दीपदाने समुद्यतः । वीतिहोत्र इति ख्यात आसीत्साधुपुरोहितः ५५ मम तच्चरितं दृष्ट्वा विभो विस्मयमागतः ।

॥ मार्कण्डेय उवाच ॥

कदाचिदुपविष्टं तं राजानं विष्णुतत्परम् ५६ अपृच्छद्वीतिहोत्रस्तं वेदवेदाङ्गपारगः । राजन् परमधर्मज्ञ हरिभक्तिपरायण ५७ विष्णुभक्तिमतां पुंसां श्रेष्ठोसि पुरुषर्षभ । संमार्जनपरो नित्यं उपलेपरतस्तथा ५८ तन्मे वद महाभाग त्वया किं विदितं फलम् । कर्माण्यन्यानि सन्त्येव विष्णोः प्रियतराणि वै ५९ तथापि त्वं महाभाग एतयोः सततोद्यतः । सर्वात्मना महापुण्यं जनेश विदितं तव ६० तद्ब्रूहि यद्यगुह्यं च प्रीतिर्मयि तवास्ति चेत् ।

॥ जयध्वज उवाच ॥

शृणुष्व विप्रशार्दूल ममैव चरितं पुरा ६१ जातिस्मरत्वा-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

जानामि श्रोतॄणां विस्मयावहम् । पूर्वजन्मनि विप्रेन्द्र रैवतो नाम वाडवः ६२ अयाज्ययाजकोहं वै सदैव ग्रामयाजकः । पिशुनो निष्ठुरश्चैव अपण्यानां च विक्रयी ६३ निषिद्धकर्माचरणात् परित्यक्तः स्वबन्धुभिः । महापापरतो नित्यं ब्रह्मद्वेषरतस्तथा ६४ परदारपरद्रव्यलोलुपो जन्तुहिंसकः । मद्यपानरतो नित्यं ब्रह्मद्वेषरतस्तथा ६५ एवं पापरतो नित्यं बहुशो मार्गरोधकृत् । कदाचित् कामचारोहं गृहीत्वा ब्राह्मणस्त्रियः ६६ शून्यं पूजादिभिर्विष्णोर्मन्दिरं प्राप्तवान्निशि । स्ववस्त्रमान्ततो ब्रह्मन् कियदंशः स मार्जितः ६७ प्रदीपः स्थापितस्तत्र सुरतार्थाद्विजोत्तम । तेनापि मम दुष्कर्म निःशेषं क्षयमागतम् ६८ एवंस्थिते विष्णुगृहे मया भोगेच्छया द्विज । तदैव दीपकं दृष्ट्वा आगताः पुरपालकाः ६९ चौयार्थं ●दूतोयमित्युक्त्वा मामघातयन् । खड्गेन तीक्ष्णधारेण शिरश्छित्वा च ते गताः ७० दिव्यं विमानमारुह्य प्रमुदाससमन्वितम् । गंधर्वैर्गीयमानोहं स्वर्गलोकं तदा गतः ७१

॥ चतुर्भुज उवाच ॥

तत्र स्थित्वा ब्रह्मकल्पं शतं साग्रं द्विजोत्तमाः । दिव्यभोगसमायुक्तो दिव्यरूपसमन्वितः ७२ जातोहं पुण्ययोगाद्धि सोमवंशसमुद्भवः । जयध्वज इति ख्यातो राजा राजीवलोचनः ७३ तत्रापि कालवशतो मृतः स्वर्गमवाप्तवान् । इंद्रलोकमनुप्राप्य रुद्रलोकं ततो गतः ७४ रुद्रलोकाद्ब्रह्मलोकं गच्छता नारदो मुनिः । दृष्टश्च नमितो नैव गर्वान्मे हसितश्च सः । कुपितः शप्तवान्मां स राक्षसो भव भूपते ७५ इति शापं समाकर्ण्य दत्तं तेन द्विजन्मना । प्रसादितो मया भूप प्रसादं कृतवान् मुनिः ७६ यदा रेवामठे राजन् धर्मपुत्रस्य धीमतः । भार्यापहारं नयतः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

शापमोक्षो भविष्यति ७७ सोहमर्जुन भूपाल धर्मपुत्र युधिष्ठिर। विष्णोः सारूप्यमगमं यामि वैकुण्ठमद्य वै ७८

॥ मार्कण्डेय उवाच ॥

इत्युक्त्वा गरुडारूढो धर्मपुत्रस्य पश्यतः। गतवान्विष्णुभुवनं यत्र विष्णुः श्रिया सह ७९ संमार्जनोपलेपाभ्यां महिमा तेन वर्णितः। अवशेनापि यत्कर्म कृत्वेमां श्रियमागतः ८० भक्तिमद्भिः प्रशान्तैश्च किं पुनः सम्यगर्चनात्।

॥ सूत उवाच ॥

मार्कण्डेयवचः श्रुत्वा पाण्डुवंशसमुद्भवः ८१ सहस्रानीकभूपालो हरिपूजारतोभवत्। तस्माच्छृणुत विप्रेन्द्रा देवो नारायणोऽव्ययः ८२ ज्ञानतोऽज्ञानतो वापि पूजकानां विमुक्तिदः। अर्चयध्वं जगन्नाथं भूयो भूयो वदाम्यहम् ८३ तर्तुं यदीच्छत द्विजा दुस्तरं भवसागरम्। येर्चयन्ति हरिं भक्ताः प्रणतार्तिहरं हरिम् ८४ ते वन्द्यास्ते प्रपूज्याश्च नमस्याश्च विशेषतः ८५

इति श्रीनरसिंहपुराणे सहस्रानीकचरिते मार्कण्डेयेनोपदिष्टसंमार्जनोपफलं नाम त्रयस्त्रिंशोऽध्यायः ॥

---

## चतुस्त्रिंशोऽध्यायः।

—०:०—

॥ श्रीसहस्रानीक उवाच ॥

पुनरेव द्विजश्रेष्ठ मार्कण्डेय महामते। निर्माल्यापनयाद्विष्णोर्यत्पुण्यं तद्वदस्व मे १

॥ मार्कण्डेय उवाच ॥

निर्माल्यमपनीयाथ तोयेन स्नाप्य केशवम्। नरसिंहाकृतिं राजन् सर्वपापैः प्रमुच्यते २ सर्वतीर्थफलं प्राप्य यानारूढो [1]दिवं

---

[1] 'यानेन सुरपूजितम्। इति 'ग' पुस्तके पाठः।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

व्रजेत् । श्रीविष्णोः सदनं प्राप्य मोदते कालमक्षयम् ३ आगच्छ नरसिंहेति आवाह्याक्षतपुष्पकैः । एतावतापि राजेन्द्र सर्वपापैः प्रमुच्यते ४ दत्वासनमथार्घ्यं च पाद्यमाचमनीयकम् । देवदेवस्य विधिना सर्वपापैः प्रमुच्यते ५ स्नाप्य तोयेन पयसा नरसिंहं नराधिप । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ६ स्नाप्य दध्ना सकृद्यस्तु निर्मलः प्रियदर्शनः । विष्णुलोकमवाप्नोति पूज्यमानः सुरोत्तमैः ७ यः करोति हरेरर्चां मधुना स्नापयन्नरः । अग्निलोके स मोदित्वा पुनर्विष्णुपुरे वसेत् ८ घृतेन स्नपनं यस्तु स्नानकाले विशेषतः । नरसिंहाकृतेः कुर्याच्छंखभेरीनिनादितम् ९ पापकंचुकमुन्मुच्य यथा जीर्णामहिस्त्वचम् । दिव्यं विमानमास्थाय विष्णुलोके महीयते १० पञ्चगव्येन देवेशं यः स्नापयति भक्तितः । मन्त्रपूर्वं महाराज तस्य पुण्यमनन्तकम् ११ यश्च गोधूमकैश्चूर्णैरुद्वर्त्योष्णेन वारिणा । प्रक्षाल्य देवदेवेशं वारुणं लोकमाप्नुयात् १२ पादपीठं तु यो भक्त्या बिल्वपत्रैर्निघर्षितम् । उष्णाम्बुना च प्रक्षाल्य सर्वपापैः प्रमुच्यते १३ कुशपुष्पोदकैः स्नात्वा ब्रह्मलोकमवाप्नुयात् । 'रत्नोदकेन सावित्रं कौबेरं हेमवारिणा' । नरसिंहं तु संस्नाप्य कर्पूरागरुवारिणा १४ इन्द्रलोके स मोदित्वा पश्चाद्विष्णुपुरे वसेत् । पुष्पोदकेन गोविन्दं स्नाप्य भक्त्या नरोत्तमः १५ सावित्रं लोकमासाद्य विष्णुलोके महीयते । 'वस्त्राभ्यामर्चनं भक्त्या परिधाप्य हरिं हरेः' १६ 'सोमलोके रमित्वा च विष्णुलोके महीयते' । कुंकुमागरुश्रीखण्डकर्दमैरच्युताकृतिम् १७ आलिप्य भक्त्या रा-

---

१ 'सर्वकाले' इति 'म' पुस्तके पाठः । २ '–कञ्चुकमुत्सृज्य' इति 'बा' पाठः । ३ 'ब्रह्मकल्पविधानेन विष्णुलोके महीयते' इति 'ख ग' पुस्तकयोः । ४ 'निवपयेदि'त्यपि पाठः 'ग' पुस्तके । ५ इदमर्धं 'क ख' पुस्तकयोर्न । ६ इमेऽर्धे 'ग' पुस्तके न ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

जेन्द्र कल्पकोटि वसेद्दिवि । मल्लिकामालतीजातिकेतक्यशोकचम्पकैः १८ 'पुन्नागनागबकुलैः पद्मैरुत्पलजातिभिः । तुलसीकरवीरैश्च पालाशैः सानुकुम्बकैः' १९ एतैरन्यैश्च कुसुमैः प्रशस्तैरच्युतं नरः । अर्चयेद्दशसुवर्णस्य प्रत्येकं फलमाप्नुयात् २० मालां कृत्वा यथालाभं एतेषां विष्णुमर्चयेत् । कल्पकोटिसहस्राणि कल्पकोटिशतानि च २१ दिव्यं विमानमास्थाय विष्णुलोके स मोदते । नरसिंहं तु यो भक्त्या बिल्वपत्रैरखण्डितैः २२ निश्छिद्रैः पूजयेद्यस्तु तुलसीभिः समन्वितम् । सर्वपापविनिर्मुक्तः सर्वभूषणभूषितः २३ काञ्चनेन विमानेन विष्णुलोके महीयते । माहिषाख्यं गुग्गुलं य आज्ययुक्तं सशर्करम् २४ धूपं ददाति राजेन्द्र नरसिंहस्य भक्तिमान् । धूपितैः सर्वदिग्भ्यस्तु सर्वपापविवर्जितः २५ अप्सरोगणसंकीर्णविमानेन विराजते । वायुलोके स मोदित्वा पश्चाद्विष्णुपुरं व्रजेत् २६ घृतेन वाथ तैलेन दीपं प्रज्वालयेन्नरः । विष्णवे विधिवद्भक्त्या तस्य पुण्यफलं शृणु २७ विहाय पापकलिलं सहस्रादित्यसमप्रभः । ज्योतिष्मता विमानेन विष्णुलोकं स गच्छति २८ हविः शाल्योदनं विद्वानाज्ययुक्तं सशर्करम् । निवेद्य नरसिंहाय यावकं पायसं तथा २९ समास्तन्दुलसंख्याया यावतीस्तावती नृप । विष्णुलोके महाभोगान्भुंजन्नास्ते स वैष्णवः ३० "पुष्पाक्षतैस्तु मन्त्रेण मन्दिरेण समन्ततः । पुष्पाक्षतैस्तु मन्त्रेण बलिं यस्तु प्रयच्छति । ब्रह्माद्यैः सह देवैश्च लोकपालाविनायकाः" । बलिना वैष्णवेनाथ तृप्ताः सन्तो दिवौकसः । शान्तिं तस्य प्रयच्छन्ति श्रियमारोग्यमेव च ३१ प्रदक्षिणेन चैकेन देवदेवस्य भक्तितः ।

---

१ इदं पद्यं 'ग' पुस्तके न । २ 'सर्वपापैः प्रमुच्यते' इति 'ग' पुस्तके पाठः । ३ 'विष्णुलोके महीयते' इति 'ग' पुस्तके पाठः ४ इदं सार्धं पद्यं 'ग' पुस्तक एव । ५ 'देवदेवस्य मन्दिरे' इति 'ग' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

कृतेन यत्फलं नृणां तच्छृणुष्व नृपात्मज ३२ पृथ्वीप्रदक्षिणफलं प्राप्य विष्णुपुरे वसेत् । नमस्कारः कृतो येन भक्त्या वै माधवस्य च ३३ धर्मार्थकाममोक्षाख्यं फलं तेनाश्वंजसा । 'स्तोत्रैर्जपैश्च देवाग्रे यः स्तौति मधुसूदनम् । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ' । गीतवाद्यादिकं नाट्यं शंखतूर्यादिनिःस्वनैः ३४ यः कारयति वै विष्णोः स याति मन्दिरं नरः । पर्वकाले विशेषेण कामगः कामरूपवान् ३५ सुसंगीतविदैश्चैव सेव्यमानोऽप्सरोगणैः । महार्हमणिचित्रेण विमानेन विराजता ३६ स्वर्गात् स्वर्गमनुप्राप्य विष्णुलोके महीयते । ध्वजं तु विष्णवे यस्तु गरुडेन समन्वितम् ३७ दद्यात्सोपि ध्वजाकीर्णविमानेन विराजता । विष्णुलोकमवाप्नोति सेव्यमानोऽप्सरोगणैः ३८ " सुवर्णाभरणैर्दिव्यैर्हारकेयूरकुण्डलैः । मुकुटाभरणाद्यैश्च यो विष्णुं पूजयेन्नृप १ सर्वपापविनिर्मुक्तः सर्वभूषणभूषितः । इन्द्रलोके वसेद्धीमान्यावदिन्द्राश्चतुर्दश " २ यो गां पयस्विनीं विष्णोः कपिलां संप्रयच्छति । "आराध्यतमथाग्रे तु यत्किंचिद्दुग्धमुत्तमम् । तद्दत्त्वा नरसिंहाय विष्णुलोके महीयते " १ पितरस्तस्य मोदन्ते श्वेतद्वीपे चिरंनृप ३९ एवं यः पूजयेद्राजन् नरसिंहं नरोत्तमः । तस्य स्वर्गापवर्गौ तु भवतो नात्र संशयः ४० यत्रैवं पूज्यते विष्णुर्नरसिंहो नरैर्नृप । न तत्र व्याधिदुर्भिक्षराजचौरादिकं भयम् ४१ नरसिंहं समाराध्य विधिनानेन माधवम् । नानास्वर्गसुखं भुक्त्वा न भूयस्तनपो

---

१ 'यत्तत्प्राप्य हरिं व्रजेत् ' इति 'क' पुस्तके पाठः । २ नमस्कारकृते यत्नः सर्वयत्नेषुचोत्तमः । नमस्कारेण चैकेन अष्टाङ्गेन हरिं व्रजेत । इति 'ग' पुस्तके नमस्कारइद्यर्थे ३ इदं पद्यं 'क ख' पुस्तकयोः ४ सुवर्णेत्यादि पद्य द्वयं 'ख' पुस्तके न । ५ 'प्रीत्यर्थ' मिति 'क' पुस्तके पाठः । ६ इदं पद्यं 'ग' पुस्तक एवं ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

भवेत् ४२ नित्यं सर्पिस्तिलैर्होमो ग्रामे यस्मिन्प्रवर्त्तते । न भवे-
त्तस्य ग्रामस्य भयं वा तत्र कुत्रचित् ४३ अनावृष्टिर्महामारी
दोषान्नादाहिका नृप । नरसिंहं समाराध्य ब्राह्मणैर्वेदपारगैः ४४
कारयेल्लक्षहोमं तु ग्रामे यत्र पुराधिपः । कृते तस्मिन्मयोक्ते तु
आगच्छति न तद्भयम् ४५ दृष्टोपसर्गमरणं प्रजानामात्मनश्च
हि । सम्यगाराधनीया तु नरसिंहस्य मन्दिरे ४६ शंकरायतने
चापि कोटिहोमं नराधिप । कारयेत्संयतैर्विप्रैः सभोजनसद-
क्षिणैः ४७ कृते तस्मिन्नृपश्रेष्ठ नरसिंहप्रसादतः । उपसर्गादि-
मरणं प्रजानामुपशाम्यति ४८ दुःस्वप्नदर्शने घोरे ग्रहपीडासु
चात्मनः । होमं च भोजनं चैव तस्य दोषः प्रणश्यति ४९
अयने विषुवे चैव चन्द्रसूर्यग्रहे तथा । नरसिंहं समाराध्य
लक्षहोमं तु कारयेत् ५० शान्तिर्भवति राजेन्द्र तस्य तत्स्था-
नवासिनाम् । एवमादिफलोपेतं नरसिंहार्चनं द्विज ५१ कुरुत्वं
भूपतेः पुत्र यदि वाञ्छसि सद्गतिम् । अतः परतरं नास्ति
स्वर्गमोक्षफलप्रदम् ५२ नरेन्द्रैः सुकरैः कर्तुं देवदेवस्य पूज-
नम् । सनत्यरण्ये ह्यमूल्यानि पत्रपुष्पाणि शाखिनाम् ५३ तोयं
नदीतडागेषु देवः साधारणः स्थितः । मनो नियमयेदेकं विद्या-
साधनकर्मणि ५४ मनो नियमितं येन मुक्तिस्तस्य करे स्थिता"।

॥ मार्कण्डेय उवाच ॥

इत्येवमुक्तं भृगुचोदितेन मया तवेहार्चनमच्युतस्य । दिने-
दिने त्वं कुरु विष्णुपूजां वदस्व चान्यत्कथयामि किं ते ५५

इति श्रीनरसिंहपुराणे सहस्रानीकचरिते श्रीविष्णोः पूजा-
विधिर्नाम चतुस्त्रिंशोऽध्यायः ।

---

१ इतः आ अध्यायसमाप्तेर्न पद्यानि 'कख' पुस्तकयोः इत्येव-
मित्याद्यन्त्यं विना ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

# ॥ पञ्चत्रिंशोऽध्यायः ॥

॥ राजोवाच ॥

अहो महत्त्वया प्रोक्तं विष्णवाराधनजं फलम् । सुप्तास्ते मुनिशार्दूल ये विष्णुं नार्चयन्ति वै १ त्वत्प्रसादाच्छ्रुतं ह्येतत् नरसिंहार्चनक्रमम् । भक्त्या तं पूजयिष्यामि कोटिहोमफलं वद २

॥ मार्कण्डेय उवाच ॥

इममर्थं पुरा पृष्टः शौनको गुरुणा नृपः । यत्तस्मै कथयामास शौनकस्तद्वदामि ते ३ शौनकं तु सुखासीनं पर्यपृच्छद्बृहस्पतिः ।

॥ बृहस्पतिरुवाच ॥

लक्षहोमस्य या भूमिः कोटिहोमस्य या शुभा ४ तां मे कथय विप्रेन्द्र होमस्य चरिते विधिम् ।

॥ मार्कण्डेय उवाच ॥

इत्युक्तो गुरुणा सोथ लक्षहोमादिकं विधिम् ५ शौनको वक्तुमारेभे यथावन्नृपसत्तम ।

॥ शौनक उवाच ॥

प्रवक्ष्यामि यथावत्ते शृणु देवपुरोहित ६ लक्षहोममहाभूमिं तद्विशुद्धिं विशेषतः । यज्ञकर्मणि शस्ताया भूमेर्लक्षणमुत्तमम् ७ सुसंकृतां समां स्निग्धां पूर्वपूर्वमथोत्तमाम् । ऊरुमात्रं खनित्वा च शोधयेत्तां विशेषतः ८ बहिरच्छतया तत्र मृदाच्छाद्य प्रलेपलेत् । प्रमाणं बाहुमात्रं तु सर्वतः कुण्डलक्षणम् ९ चतुरस्रं चतुःकोणं तुल्यसूत्रेण कारयेत् । उपरि मेखलां कुर्या चतुरस्रां सुविस्तराम् १० चतुरंगुलमात्रं तु उच्छ्रितां सूत्रसू-

---

१ 'यथा तत्त्वम्' इति 'वा' पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

त्रिताय । ब्राह्मणान् वेदसंपन्नान् ब्रह्मकर्मसमन्वितान् ११ आमन्त्रयेद्यथान्यायं यजमानो विशेषतः । ब्रह्मचर्यव्रतं कुर्युस्त्रिरात्रं ते द्विजातयः १२ अहोरात्रमुपोष्याथ गायत्रीमयुतं जपेत् । ते शुक्लवाससः स्नाता गन्धस्रक्पुष्पधारिणः १३ शुचयश्च निराहाराः संतुष्टाः संयतेन्द्रियाः । कौशमासनमासीना एकाग्रमनसः पुनः १४ आरभेयुश्च ते यत्नात् ततो होममतन्द्रिताः । भूमिमालिख्य चाभ्युक्ष्य यत्नादग्निं निधापयेत् १५ गृह्योक्तेन विधानेन होमं तत्र च होमयेत् । आघारावाज्यभागौ च जुहुयात्पूर्वमेव तु १६ यवधान्यतिलैर्मिश्रां गायत्र्या प्रथमाहुतिम् । जुहुयादेकचित्तेन स्वाहाकारान्वितां बुधः १७ गायत्री छन्दसां माता ब्रह्मयोनिः प्रतिष्ठिता । सविता देवता तस्या विश्वामित्रस्तथा ऋषिः १८ ततो व्याहृतिभिः पश्चाज्जुहुयाच्च तिलान्वितम् । यावत् प्रपूर्यते संख्या लक्षं वा कोटिरेव वा १९ तावद्धोमं तिलैः कुर्यादच्युतार्चनपूर्वकम् । दीनानाथजनेभ्यस्तु यजमानः प्रयत्नतः २० तावच्च भोजनं दद्याद्यावद्धोमं समाचरेत् । समाप्ते दक्षिणां दद्यात् ऋत्विग्भ्यः श्रद्धयान्वितः २१ यथार्हता न लोभेन ततः शान्त्युदकेन च । प्रोक्षयेद्ग्राममध्ये तु व्याधितां स्तुविशेषतः २२ एवं कृते तु होमस्य पुरस्य नगरस्य च । राष्ट्रस्य च महाभाग राज्ञो जनपदस्य च २३ सर्वबाधाप्रशमनी शान्तिर्भवति सर्वदा ।

॥ मार्कण्डेय उवाच ॥

इत्येतच्छौनक प्रोक्तं कथितं नृपनन्दन २४ लक्षहोमादिकविधिं राष्ट्रे कार्यं सुशान्तिदम् । ग्रामे गृहे वा पुरबाह्यदेशे द्विजैरयं यत्नकृतः पुरोविधिः । तत्रापि शान्तिर्भविता नराणां गवां च भृत्यैः सह भूपतेश्च २५

इति श्रीनरसिंहपुराणे लक्षहोमविधिर्नाम पञ्चत्रिंशोऽध्यायः ३५

---

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

## ॥ षट्त्रिंशोऽध्यायः ॥

—०:०—

॥ मार्कण्डेय उवाच ॥

अवतारानहं वक्ष्ये देवदेवस्य चक्रिणः । तान् शृणुष्व महीपाल पवित्रान् पापनाशनान् १ यथामत्स्येन रूपेण दत्ता वेदाः स्वयंभुवे । मधुकैटभौ च निधनं प्रापितौ च महात्मना २ यथा कौर्मेण रूपेण विष्णुना मन्दरो धृतः । यथा पृथ्वी धृता राजन् वाराहेण महात्मना ३ तेनैव निधनं प्राप्तो यथा राजन् महाबलः । हिरण्याक्षो महावीर्यो दितिपुत्रो महातनुः ४ यथा हिरण्यकशिपुस्त्रिदशानामरिः पुरा । नरसिंहेन देवेन प्रापितो निधनं नृप ५ यथा बद्धो बलिः पूर्वं वामनेन महात्मना । इन्द्रस्त्रिभुवनाध्यक्षः कृतस्तेन नृपात्मज ६ रामेण भूत्वा च यथा विष्णुना रावणो हतः । सगुणाश्चाद्भुता राजन् राक्षसा देवकण्टकाः ७ यथा परशुरामेण क्षत्रमुत्सादितं पुरा । 'बलभद्रेण रामेण यथा दैत्यः पुराहतः'[1] । यथा कृष्णेन कंसाद्या हता दैत्याः सुरद्विषः ८ कलौ प्राप्ते यथा बुद्धो भवेन्नारायणः प्रभुः । कल्किरूपं समास्थाय यथा म्लेच्छा निपातिताः । समाप्ते तु कलौ भूयस्तथा ते कथयाम्यहम् ९ हरेरनन्तस्य पराक्रमं यः शृणोति भूपाल समाहितात्मा । मयोच्यमानं स विमुच्य पापं प्रयाति विष्णोः पदमत्युदारम् १० इति श्रीनरसिंहपुराणे हरेः प्रादुर्भावानुक्रमणे षट्त्रिंशोऽध्यायः ३६

## ॥ सप्तत्रिंशोऽध्यायः ॥

॥ मार्कण्डेय उवाच ॥

नानात्वादवताराणामच्युतस्य महात्मनः । न शक्यं विस्त-

---

१ इदमर्धं 'ग' पुस्तक एव ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

राद्वक्तुं तान् ब्रवीमि समासतः १ पुरा किलजगत्स्रष्टा भगवान् पुरुषोत्तमः। अनन्तभोगशयने योगनिद्रां समागतः २ अथ तस्य प्रसुप्तस्य देवदेवस्य शार्ङ्गिणः। श्रोत्राभ्यामपतत्तोये स्वेदबिन्दुद्वयं नृप ३ मधुकैटभनामानौ तस्माज्जातौ महाबलौ। महाकायौ महावीर्यौ महाबलपराक्रमौ ४ अच्युतस्य प्रसुप्तस्य महत्पद्ममजायत। नाभिमध्ये नृपश्रेष्ठ तस्मिन् ब्रह्मा ऽभ्यजायत ५ स चोक्तो विष्णुना राजन् प्रजाः सृज महामते। तथेत्युक्त्वा जगन्नाथं ब्रह्मापि कमलोद्भवः ६ वेदशास्त्रवशाद्यावत् प्रजाः स्रष्टुं समुद्यतः। तावत्तत्र समायातौ तावुभौ मधुकैटभौ ७ आगत्य वेदशास्त्रार्थविज्ञानं ब्रह्मणः क्षणात्। अपकृत्य गतौ घोरौ दानवौ बलदर्पितौ ८ ततः पद्मोद्भवो राजन् ज्ञानहीनोभवत् क्षणात्। दुःखितश्चिन्तयामास कथं स्रक्ष्यामि वै प्रजाः ९ चोदितस्त्वं सृजस्वेति प्रजा देवेन तत्कथम्। स्रक्ष्येहं ज्ञानहीनस्तु अहो कष्टमुपस्थितम् १० इति संचिन्त्य दुःखार्त्तो ब्रह्मा लोकपितामहः। यत्नतो वेदशास्त्राणि स्मरन्नपि न दृष्टवान् ११ ततो विषण्णचित्तस्तु तं देवं पुरुषोत्तमम्। एकाग्रमनसा सम्यक् शास्त्रेण स्तोतुमारभत् १२

॥ ब्रह्मोवाच ॥

ॐनमो वेदनिधये शास्त्राणां निधये नमः। विज्ञाननिधये नित्यं कर्मणां निधये नमः १३ विद्याधराय देवाय वागीशाय नमोनमः। अचिन्त्याय नमो नित्यं सर्वज्ञाय नमोनमः १४ अमूर्त्तिस्त्वं महाबाहो यज्ञमूर्तिरधोक्षज। साम्नां मूर्त्तिस्त्वमेवाद्य सर्वदा सर्वरूपवान् १५ सर्वज्ञानमयोसि त्वं हृदि ज्ञानमयोच्युत। देहि मे त्वं सर्वज्ञानं देवदेव नमोनमः १६

॥ मार्कण्डेय उवाच ॥

इत्थं स्तुतस्तदा तेन शंखचक्रगदाधरः। ब्रह्माणमाह देवेशो दास्ये ते ज्ञानमुत्तमम् १७ इत्युक्त्वा तु तदा विष्णुश्चिन्तया-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मास पार्थिव । केनास्य नीतं विज्ञानं केन रूपेण चादधे १८ मधुकैटभकृतं सर्वमिति ज्ञात्वा जनार्दनः । मात्स्यं रूपं समास्थाय बहुयोजनमायतम् । बहुयोजनविस्तीर्णं सर्वज्ञानमयं नृप १९ स प्रविश्य जलं तूर्णं क्षोभयामास तं हरिः । प्रविश्य च स पातालं दृष्टवान् मधुकैटभौ २० तौ मोहयित्वा तुमुलं तज्ज्ञानं जगृहे हरिः । वेदशास्त्राणि मुनिभिः संस्तुतो मधुसूदनः २१ आनीय ब्रह्मणे दत्वा त्यक्त्वातन्मात्स्यकं नृप । जगद्धिताय स पुनर्योगनिद्रावशं गतः २२ ततः प्रबुद्धौ संक्रुद्धौ तावुभौ मधुकैटभौ । आगत्य ददृशाते तु शयानं देवमव्ययम् २३ अयं स पुरुषो धूर्त्त आवां संमोह्य मायया । आनीय वेदशास्त्राणि दत्त्वा शेतेऽत्र साधुवत् २४ इत्युक्त्वा तौ महाघोरौ दानवौ मधुकैटभौ । तूर्णं प्रबोधयामास शयानं केशवं नृप २५ युद्धार्थमागतावत्र त्वया सह महामते । आवयोर्देहि संग्रामं युध्यस्वोत्थाय साम्प्रतम् २६ इत्युक्तो भगवांस्ताभ्यां देवदेवो नृपोत्तम । तथेति चोक्त्वा तौ देवः शार्ङ्गं सज्जमथाकरोत् २७ ज्याघोषतलघोषेण शंखशब्देन माधवः । खं दिशः प्रदिशश्चैव पूरयामास लीलया २८ तौ च राजन् महावीर्यौ ज्याघोषं चक्रतुस्तदा । युयुधाते महाघोरौ हरिणा मधुकैटभौ २९ कृष्णश्च युयुधे ताभ्यां लीलया जगतः पतिः । समं युद्धमभूदेवं तेषामस्त्राणि मुञ्चताम् ३० केशवः शार्ङ्गनिर्मुक्तैः शरैराशीविषोपमैः । तानि शस्त्राणि सर्वाणि चिच्छेद तिलशस्तदा ३१ तौ युध्वा सुचिरं तेन दानवौ मधुकैटभौ । हतौ शार्ङ्गविनिर्मुक्तैः शरैः कृष्णेन दुर्मदौ ३२ तयोस्तु मेदसा राजन् विष्णुना कल्पिता[1] मही । मेदिनीति ततः संज्ञामवापेयं वसुंधरा ३३ एवं कृष्णप्रसादेन वेदांल्लब्ध्वा प्रजापतिः । प्रजाः ससर्ज भूपाल

---

१ 'कलिता मही' इति 'कख' पुस्तकयोः



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वेददृष्टेन कर्मणा ॥३४॥ य इदं शृणुयान्नित्यं प्रादुर्भावं हरेर्नृप । वसित्वा¹ चन्द्रसदने वेदविद्ब्राह्मणो भवेत् ॥ ३५ ॥ मात्स्यं वपुस्तन्महदद्रितुल्यं विद्यामयं लोकहिताय विष्णुः । आस्थाय भीमं जनलोकसंस्थैःस्तुतोऽथ यस्तं स्मर भूमिपाल ॥ ३६ ॥

इति श्रीनरसिंहपुराणे मत्स्यप्रादुर्भावो नाम सप्तत्रिंशोऽध्यायः ३७

## ॥ अष्टत्रिंशोऽध्यायः ॥

—०:०—

॥ मार्कण्डेय उवाच ॥

पुरा देवासुरे युद्धे देवा दैत्यैः पराजिताः । सर्वे ते शरणं जग्मुः क्षीराब्धितनयापतिम् ॥ १ ॥ स्तोत्रेण तुष्टुवुः सर्वे समाराध्य जगत्पतिम् । कृताञ्जलिपुटा राजन् ब्रह्माद्या देवतागणाः २

॥ देवा ऊचुः ॥

'²नमस्ते देवदेवाय लोकनाथाय शार्ङ्गिणे' । नमस्ते पद्मनाभाय लोकनाथाय शार्ङ्गिणे ३ नमस्ते पद्मनाभाय सर्वदुःखापहारिणे । नमस्ते विश्वरूपाय सर्वदेवमयाय च ४ मधुकैटभनाशाय केशवाय नमो नमः ५ दैत्यैः पराजिता देव वयं युद्धे बलान्वितैः । जयोपायं हि नो ब्रूहि करुणाकर ते नमः³६

॥ मार्कण्डेय उवाच ॥

इति स्तुतो तदा देवैर्देवदेवो जनार्दनः । तानब्रवीद्धरिर्देवान्⁴ तेषामेवाग्रतः स्थितः ॥ ७ ॥

॥ श्रीभगवानुवाच ॥

गत्वा तत्र सुराः सर्वे संधिं कुरुत दानवैः । मन्थानं म-

---

१ 'उषित्वाऽसौहरेर्लोकेवेदविद्ब्राह्मणो भवेत्' । इति 'ग' पुस्तके पाठः । 'पद्दिन्द्रतुल्यं' इति 'ग' पुस्तके पाठः । २ इदमर्धं 'कख' पुस्तकयोरधिकम् । ३ 'तेषां देव नमोनमः' इति 'ग' पुस्तके पाठः । ४ 'तानुवाच हरिः साक्षात्' इति 'ग' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

न्दरं कृत्वा नेत्रं कृत्वा च वासुकिम् ॥ ८ ॥ सर्वौषधीः समानीय प्रक्षिप्याब्धौ त्वरान्विताः। दानवैः सहिता भूत्वा मन्थध्वं क्षीरसागरम् ॥ ९ ॥ अहं च तत्र साहाय्यं करिष्यामि दिवौकसः। भविष्यत्यमृतं तत्र तत्पानाद्बलवत्तराः ॥ १० ॥ भविष्यन्ति क्षणाद्देवा अमृतस्य प्रभावतः। यूयं सर्वे महाभागास्तेजिष्ठा रणविक्रमाः ११ इन्द्राद्यास्तु महोत्साहास्तल्लब्ध्वाऽमृतमुत्तमम्। ततो हि दानवाञ्जेतुं समर्था नात्र संशयः१२ इत्युक्ता देवदेवेन देवाः सर्वे जगत्पतिम्। प्रणम्यागत्य निलयं संधिं कृत्वाथ दानवैः १३ क्षीराब्धेर्मन्थने सर्वे चक्रुरुद्योगमुत्तमम्। बलिना चोद्धृतो राजन् मन्दराख्यो महागिरिः १४ क्षीराब्धौ क्षेपितश्चैव तेनैकेन नृपोत्तम। सर्वौषधीश्च प्रक्षिप्य देवदैत्यैः पयोनिधौ १५ वासुकिश्चागतस्तत्र राजन्नारायणाज्ञया। सर्वे देवहितार्थाय विष्णुश्च स्वयमागतः १६ तत्र विष्णुं समासाद्य ततः सर्वे सुरासुराः। सर्वे ते मैत्रभावेन क्षीराब्धेस्तटमाश्रिताः १७ मन्थानं मन्दरं कृत्वा नेत्रं कृत्वाऽथ वासुकिम्। ततो मथितुमारब्धं नृपते तरसाऽमृतम् १८ विष्णुना मुखभागे तु योजिता दानवास्तदा। देवताः पुच्छभागे तु मथनाय नियोजिताः १९ एवं च मथनात्तत्र मन्दरोऽधः प्रविश्य च। आधारेण विना राजन् तं दृष्ट्वा सहसा हरिः२० सर्वलोकहितार्थाय कूर्मरूपमधारयत। आत्मानं संप्रविश्याथ मन्दरस्य गिरेरधः २१ प्रविश्य धृतवान् शैलं मन्दरं मधुसूदनः उपर्याक्रांतवान् शैलं पृथग्रूपेण केशवः २२ चकर्ष नागराजं च देवैः सार्धं जनार्दनः। 'सुरैरदृश्यरूपेण दैत्यमध्ये जनार्दनः'।

---

१ गच्छध्वं ' क्षीरसागरम् ' इति 'ग' पुस्तके दृश्यते। २ 'वासुके दानवास्तदा ' इति ' ग ' पुस्तके पाठः। ३ ' मथितुं नैव शक्यते ' इति ' कख ' पुस्तकयोः। ४ इदमर्धं ' क ' पुस्तके न।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ततस्ते त्वरया युक्ता ममन्थुः क्षीरसागरम् २३ यावच्छक्त्या नृपश्रेष्ठ बलवंतः सुरासुराः। मथ्यमानात्ततस्तस्मात् क्षीराब्धेर-भवन्नृप २४ कालकूटमिति ख्यातं विषमत्यन्तदुःसहम् । तं नागा जगृहुः सर्वे तच्छेषं शंकरोग्रहीत् २५ नारायणाज्ञया तेन नीलकण्ठत्वमाप्तवान् । ऐरावतश्च नागेन्द्रो हरिश्चोच्चैःश्रवाः पुनः २६ द्वितीयावर्तनाद्राजन्नुत्पन्नाविति नः श्रुतम्। तृतीयाव-र्तनाद्राजन्नप्सराश्च सुशोभना। चतुर्थात्पारिजातश्च उत्पन्नः स महाद्रुमः २७ पंचमाद्धि हिमांशुस्तु मोत्थितः क्षीरसागरात्। तं भवः शिरसा धत्ते नारीवत् स्वस्तिकं नृप २८ नाना-विधानि दिव्यानि रत्नान्याभरणानि च । क्षीरोदधेरुत्थिताश्च गंधर्वाश्च सहस्रशः २९ एतान् दृष्ट्वा तथोत्पन्नानत्याश्चर्यसम-न्वितान्। अभवन्जातहर्षास्ते तत्र सर्वे सुरासुराः ३० देवपक्षे ततो मेघाः स्वल्पं वर्षन्ति संस्थिताः । कृष्णाज्ञया च वायुश्च सुखं वाति सुरान्प्रति ३१ विषनिःश्वासवातेन वासुकेश्चापरे हताः। निस्तेजसोऽभवन् दैत्या निर्वीर्याश्च महामते ३२ ततः श्रीरुत्थिता तस्मात् क्षीरोदाद्धृतपंकजा । विभ्राजमाना राजेन्द्र दिशः सर्वाः स्वतेजसा ३३ ततस्तीर्थोदकैः स्नाता दिव्यवस्त्रै-रलंकृता। दिव्यगन्धानुलिप्तांगी सुमनोभिः सुभूषणैः ३४ देवपक्षं समासाद्य स्थित्वा क्षणमरिंदमाहरिवक्षःस्थलं प्राप्ता ततः सा कमलालया ३५ ततो ऽमृतघटं पूर्णं दुग्ध्वातु पयसो निधेः । धन्वन्तरिः समुत्तस्थौ ततः प्रीताः सुरा नृप ३६ दैत्याः श्रिया परित्यक्ता दुःखितास्तेऽभवन्नृप । नीत्वाऽमृतघटं पूर्णं ते च ज-ग्मुर्यथासुखम् ३७ ततः स्त्रीरूपमकरोद्विष्णुर्देवहिताय वै। आत्मानं नृपशार्दूल सर्वलक्षणसंयुतम् ३८ ततो जगाम भग-वान् स्त्रीरूपेणासुरान् प्रति। दिव्यरूपां तु तां दृष्ट्वा मोहिता-स्ते सुरद्विषः ३९ सुधापूर्णघटं ते तु मोहैः संस्थाप्य सत्तम।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

कामेन पीडिता ह्यासन्नसुरास्तत्र तत्क्षणात् ४० मोहयित्वा तु तानेवमसुरानवनीपते। अमृतं तु समादाय देवेभ्यः प्रददौ हरिः ४१ तत्पीत्वा तु ततो देवा देवदेवप्रसादतः। बलवन्तो महावीर्या रणे जघ्नुस्ततोऽसुरान् ४२ जित्वा रणेऽसुरान् देवाः स्वानि राज्यानि चक्रिरे। एतत्ते कथितं राजन् प्रादुर्भावो हरेरयम् ४३ कूर्माख्यः पुण्यदो नृणां शृण्वतां पठतामपि। आविष्कृतं कौर्ममनन्तवर्चसं नारायणेनाद्भुतकर्मकारिणा। दिवौकसानां तु हिताय केवलं रूपं परं पावनमेव कीर्तितम् ४४ इति श्रीनरसिंहपुराणे कूर्मप्रादुर्भावोनामाष्टत्रिंशोऽध्यायः ३८

## एकोनचत्वारिंशोऽध्यायः।

॥ मार्कण्डेय उवाच ॥

अतःपरं हरेःपुण्यं प्रादुर्भावं नराधिप। वाराहं ते प्रवक्ष्यामि समाहितमनाः शृणु १ आवन्तप्रलये[1] प्राप्ते ब्रह्मणस्तु दिनक्षये। त्रैलोक्यमखिलं व्याप्य तिष्ठन्त्यम्भांसि सत्तम २ त्रैलोक्येऽखिलसत्त्वानि यानि राजेन्द्र तानि वै। ग्रस्त्वा विष्णुस्ततः शेते तस्मिन्नेकार्णवे जले ३ अनन्तभोगशयने सहस्रफणशोभिते। रात्रिं युगसहस्रांतां ब्रह्मरूपी जगत्पतिः ४ दितेः पुत्रो महानासीत् कश्यपादिति नः श्रुतम्। हिरण्याक्षइति ख्यातो महाबलपराक्रमः ५ [2]'पाताले निवसन्दैत्यो देवानुपरुरोध सः। यज्ञिनामपाकाराय यतते स तु भूतले'॥अथ भूम्युपरि स्थित्वा मर्त्या यक्ष्यन्ति देवताः। तेन तेषां बलं वीर्यं तेजश्चापि भविष्यति ६ इति मत्वा हिरण्याक्षः कृतसर्गं तु ब्रह्मणा। भूमेर्या धारणाशक्तिस्तां नीत्वा स महासुरः ७ विवेश तोयमध्ये तु र-

१ आवान्तरलये प्राप्ते तु 'ग' पुस्तके पाठः। २ अयं 'क ख' स्तकयोर्न।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सातलतलं नृप । विना शक्त्या च जगती प्रविवेश रसातलम् ८ निद्रावसाने सर्वात्मा क्व स्थिता मेदिनीति वै । सञ्चिन्त्य ज्ञात्वा योगेन रसातलतलं गताम् ९ अथ वेदमयं रूपं वाराहं वपुरास्थितम् । वेदपादं यूपदंष्ट्रं केतुवक्त्रं नराधिप १० व्यूढोरस्कं महाबाहु पृथुवक्त्रं नराधिप । अग्निजिह्वं स्रुचं तुन्डं चन्द्रार्कनयनं महत् । पूर्वेष्टधर्मश्रवणं दिव्यं तत्सामनिःस्वनम् ११ प्राग्वंशकायं हविर्नासं कुशदर्भतनूरुहम् । सर्व वेदमयं तच्च पुण्यसूक्तमहासटम् १२ नक्षत्रतारहारं च प्रलयावर्त्तभूषणम् । इत्थं कृत्वा तु वाराहं प्रविवेश वृषाकपिः १३ रसातलं नृपश्रेष्ठ सनकाद्यैरभिष्टुतः । प्रविश्य च हिरण्याक्षं युद्धे जित्वा वृषाकपिः १४ दंष्ट्राग्रेण ततः पृथ्वीं समुद्धृत्य रसातलात् । स्तूयमानोऽमरगणैः स्थापयामास पूर्ववत् १५ संस्थाप्य पर्वतान् सर्वान् यथास्थानमकल्पयत् । विहाय रूपं वाराहं तीर्थे काकेतिविश्रुते १६ वैष्णवानां हितार्थाय क्षेत्रं तद्गुह्यमुत्तमम् । ब्रह्मरूपं समास्थाय पुनः सृष्टिं चकार सः १७ विष्णुः पाति जगत्सर्वमेवंभूतो युगेयुगे । हन्ति चान्ते जगत्सर्वं रुद्ररूपी जनार्दनः । वेदान्तवेद्यः पुरुषो वृषाकपेः कथामिमां यश्च शृणोति मानवः । दृढां मतिं यज्ञतनौ विवेश्य वै विहाय पापं च नरो हरिं व्रजेत् १८

इति श्रीनरसिंहपुराणे वाराहप्रादुर्भावो नाम एकोनचत्वारिंशोऽध्यायः ३९

---

## चत्वारिंशोऽध्यायः ।

—०:०—

॥ मार्कण्डेय उवाच ॥

वाराहः कथितो ह्येवं प्रादुर्भावो हरेस्तव । साम्प्रतं नारसिंहं

---

१ 'मुनिश्रेष्ठे' रिति 'ग' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तु प्रवक्ष्यामि निबोध मे १ दितेः पुत्रो महानासीद्धिरण्यकशिपुः पुरा । तपस्तेपे निराहारो बहुवर्षसहस्रकम् २ तपनस्तस्य संतुष्टो ब्रह्मा तं प्राह दानवम् । वरं वरय दैत्येन्द्र यस्ते मनसि वर्तते ३ इत्युक्तो ब्रह्मणा दैत्यो हिरण्यकशिपुः पुरा । उवाच नत्वा देवशं ब्रह्माणं विनयान्वितः ४

॥ हिरण्यकशिपुरुवाच ॥

यदि त्वं वरदानाय प्रवृत्तो भगवन्मम । यद्यद्वृणोम्यहं ब्रह्मंस्तत्तन्मे दातुमर्हसि ५ न शुष्केण न चार्द्रेण न जलेन न वह्निना । न काष्ठेन न कीटेन पाषाणेन न वायुना ६ नायुधेन न शूलेन न शैलेन न मानुषैः । न सुरैरसुरैर्वापि न गन्धर्वैर्न राक्षसैः ७ न किन्नरैर्न यक्षैस्तुविद्याधरभुजङ्गमैः । न वानरैर्मृगैर्वापि नैव मातृगणैरपि ८ नाभ्यन्तरे न बाह्ये तु नान्यैर्मरणहेतुभिः । न दिने न च रात्रौ मे त्वत्प्रसादाद्भवेन्मृतिः ९ इति वै देवदेवेश वरं त्वत्तो वृणोम्यहम् ।

॥ मार्कण्डेय उवाच ॥

इत्युक्तो दैत्यराजेन ब्रह्मा तं प्राह पार्थिवम् १० तपसा तव तुष्टोऽहं महता तु वरानिमान् । दुर्लभानपि दैत्येन्द्र ददामि परमाद्भुतान् ११ अन्येषां नेदृशं दत्तं न तैरित्थं तपः कृतम् । त्वत्प्रार्थितं मया दत्तं सर्वं ते चास्तु दैत्यप १२ गच्छ भुंक्ष्व महाबाहो तपसामूर्जितं फलम् । इत्येवं दैत्यराजस्य हिरण्यकशिपोः पुरा १३ दत्वा वरान् ययौ ब्रह्मा ब्रह्मलोकमनुत्तमम् । सोपि लब्धवरो दैत्यो बलवान् बलदर्पितः १४ देवान् सिंहान् रणे जित्वा दिवः प्राच्यावयद्भुवि । दिवि राज्यं स्वयं चक्रे सर्वशक्तिसमन्वितम् १५ देवा अपि भयात्तस्य रुद्राश्चैवर्षयो नृप । विचेरुरवनौ सर्वे बिभ्राणा मानुषीं तनुम् १६ प्राप्तत्रैलोक्यराज्योऽसौ हिरण्यकशिपुः प्रजाः । आहूय सर्वान् राजेन्द्र वाक्यं चेदमभाषत १७ न

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यष्टव्यं न होतव्यं न दातव्यं सुरान् प्रति । युष्माभिरहमेवाद्य त्रैलोक्याधिपतिः प्रजाः १८ ममैव पूजां कुरुत यज्ञदानादिकर्मणा । ताश्च सर्वास्तथा चक्रुर्दैत्येन्द्रस्य भयान्नृप १९ यत्रैवं क्रियमाणेषु त्रैलोक्यं सचराचरम् । अधर्मयुक्तं सकलं बभूव नृपसत्तम २० स्वधर्मलोपात्सर्वेषां पापे मतिरजायत । गते काले तु महति देवाः सेन्द्रा बृहस्पतिम् २१ नीतिज्ञं सर्वशास्त्रज्ञं पप्रच्छुर्विनयान्विताः । हिरण्यकशिपोरस्य विनाशं मुनिसत्तम २२ त्रैलोक्यप्रहारिणः शीघ्रं वधोपायं वदस्व नः ।

॥ बृहस्पतिरुवाच ॥

शृणुध्वं मम वाक्यानि स्वपदप्राप्तये सुराः २३ प्रायो हिरण्यकशिपुः क्षीणभागो महासुरः। 'शोको नाशयति प्रज्ञां शोको नाशयति श्रुतम् २४ शोको मतिं नाशयति नास्ति शोकसमो रिपुः । सोढुं शक्योऽग्निसंबन्धः शस्त्रस्पर्शश्च दारुणः २५ न नु शोकभवं दुःखं संसोढुं नृप शक्यते । कालान्निमित्ताच्च वयं लक्ष्यामस्तत्क्षयं सुराः' २६ बुधाश्च सर्वे सर्वत्र स्थिता वक्ष्यन्ति नित्यशः । अचिरादेव दुष्टोऽसौ नश्यत्येव परस्परम् २७ देवानां तु परामृद्धिं स्वपदप्राप्तिलक्षणम् । हिरण्यकशिपोर्नाशं शकुनानि वदन्ति मे २८ यत एवमतो देवाः सर्वे गच्छतमाचिरम् । क्षीरोदस्योत्तरं तीरं प्रसुप्तो[2] यत्र केशवः २९ युष्माभिः संस्तुतो देवः प्रसन्नो भवति क्षणात् । सहि प्रसन्नो दैत्यस्य वधोपायं वदिष्यति ३० इत्युक्तास्तेन देवास्ते साधुसाध्वित्यथाब्रुवन्। प्रीत्या च परया युक्ता गन्तुं चक्रुरथोद्यमम् ३१ पुण्ये तिथौ शुभे लग्ने पुण्यं स्वस्ति च मङ्गलम् । कारयित्वा मुनिवरैः प्रस्थितास्ते दिवौकसः ३२ नाशाय दुष्टदैत्यस्य स्वभूत्यैच नृपोत्तम। ते-

---

१ इदं पद्यसार्धद्वयं 'ग' पुस्तके न। २ 'स्तूयतां तत्र केशवम्' इति 'ग' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

शर्वमग्रतः कृत्वा क्षीराब्धेरुत्तरं तटम् ३३ तत्र गत्वा सुराः सर्वे विष्णुं जिष्णुं जनार्दनम् । अस्तुवन् विविधैः स्तोत्रैः पूजयन्तः प्रतस्थिरे ३४ भवोपि भगवान् शक्त्या भगवन्तं जनार्दनम् । अस्तुवन्नामभिः पुण्यैरेकाग्रमनसा हरिम् ३५

॥ श्रीमहादेव उवाच ॥

विष्णुर्जिष्णुर्विभुर्देवो यज्ञेशो यज्ञपालकः । प्रभविष्णुर्ग्रसिष्णुश्च लोकात्मा लोकपालकः ३६ केशवः केशिहा कल्पः सर्वकारणकारणम्। कर्मकृद्वामताधीशो वासुदेवः पुरुष्टुतः ३७ आदिकर्ता वराहश्च माधवो मधुसूदनः । नारायणो नरो हंसो विष्णुसेनो हुताशनः ३८ ज्योतिष्मान् द्युतिमान् श्रीमानायुष्मान् पुरुषोत्तमः । वैकुण्ठः पुण्डरीकाक्षः कृष्णः सूर्यः सुरार्चितः ३९ नरसिंहो महाभीमो वज्रदंष्ट्रो नखायुधः । आदिदेवो जगत्कर्त्ता योगेशो गरुडध्वजः४० गोविन्दो गोपतिर्गोप्ता भूपतिर्भुवनेश्वरः। पद्मनाभो हृषीकेशो विभुर्दामोदरो हरिः ४१ त्रिविक्रमस्त्रिलोकेशो ब्रह्मेशः प्रीतिवर्धनः।वामनो दुष्टदमनो गोविन्दो गोपवल्लभः ४२ भक्तिप्रियोऽच्युतः सत्यः सत्यकीर्त्तिर्ध्रुवः शुचिः। कारुण्यः करुणो व्यासः पापहा शान्तिवर्धनः ४३ संन्यासी शास्त्रतत्त्वज्ञो मन्दारगिरिकेतनः । बदरीनिलयः शान्तस्तपस्वी वैद्युतप्रभः ४४ भूतावासो गुहावासः श्रीनिवासः श्रियः पतिः । तपोवासो दमो वासः सत्यवासः सनातनः ४५ पुरुषः पुष्कलः पुण्यः पुष्कराक्षो महेश्वरः। पूर्णः पूर्तिः पुराणज्ञः पुण्यज्ञः पुण्यवर्द्धनः ४६ शंखी चक्री गदी शार्ङ्गी लाङ्गली मुशली हली। किरीटी कुण्डली हारी मेखली कवची ध्वजी ४७ जिष्णुर्जेता महावीरः शत्रुघ्नः शत्रुतापनः । शान्तः शान्तिकरः शास्ता शङ्करः शंन्तनुस्तुतः[1]४८ सारथिः सात्विकः स्वामी सामवेदप्रियः समः।

---

१ ‘शन्तनोः सुतः’ ‘क’ पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सावनः[1] साहसी सत्वः संपूर्णांशः समृद्धिमान् ४९ स्वर्गदः कामदः श्रीदः कीर्तिदः कीर्तिनाशनः । मोक्षदः पुण्डरीकाक्षो क्षीराब्धिकृतकेतनः ५० स्तुतः सुरासुरैरीशः प्रेरकः पापनाशनः । त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारस्त्वमग्नयः ५१ त्वं स्वाहा त्वं स्वधा देवस्त्वं सुधा पुरुषोत्तम । नमो देवादिदेवाय विष्णवे शाश्वताय च ५२ अनन्तायाप्रमेयाय नमस्ते गरुडध्वज ।

॥ मार्कण्डेय उवाच ॥

इत्येतैर्नामभिर्दिव्यैः संस्तुतो मधुसूदनः ५३ उवाच प्रकटीभूत्वा देवान् सर्वानिदं वचः ।

॥ श्रीभगवानुवाच ॥

युष्माभिः संस्तुतो देवा नामभिः केवलैः शुभैः ५४ अत एव प्रसन्नोऽस्मि किमर्थं करवाणि वः ।

॥ देवा ऊचुः ॥

देवदेव हृषीकेश पुण्डरीकाक्ष माधव ५५ त्वमेव जानासि हरे किं तस्मात् परिपृच्छसि ।

॥ श्रीभगवानुवाच ॥

युष्मदागमनं सर्वं जानाम्यसुरसूदनाः ५६ हिरण्यक[3]विनाशार्थं स्तुतोहं शंकरेण तु[2] । पुण्यनामशतेनैव संस्तुतोहं भवेन च ५७ एतेन यस्तु मां नित्यं त्वयोक्तेन महामते । तेनाहं पूजितो नित्यं भवामीह त्वया यथा ५८ प्रीतोहं गच्छ देव त्वं कैलासशिखरं शुभम् । त्वया स्तुतो हनिष्यामि हिरण्यकशिपुं भव ५९ गच्छ[4]ध्वमधुना देवाः कालं कंचित्प्रतीक्ष-

---

१ ' शवनः शासकः ' इति ' ग ' पुस्तके पाठः । २ ' शिवेन च महात्मना ' इति ' ग ' पुस्तके पाठः । ३ ' हिरण्यकशिपोर्भीत्या ' इति 'क' पुस्तके पाठः । ४ " अहमद्य गमिष्यामि शक्रस्येन्द्रत्वसिद्धये । हिरण्यकशिपोर्नाशो भवतामपि सिद्धये । युष्माकं विजयायैव क्षयाय विबुधद्विषाम् " इति ' ग ' पुस्तके सार्धश्लोकः ॥ ' गच्छध्वमधुने 'त्यतो ' देवदानवै'रित्यन्तं पद्यद्वयं ग पुस्तके न । ' क ख ' योस्तु विद्यते ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ताम् । यदास्य तनयो धीमान् प्रल्हादो नाम वैष्णवः ६० तस्य द्रोहं यदा दैत्यः करिष्यति सुरास्तदा । हनिष्यामि वरैर्गुप्तमजेयं देवदानवैः । इत्युक्त्वा विष्णुना देवा नत्वा विष्णुं ययुर्नृप ६१ इति श्रीनरसिंहपुराणे विष्णोर्नामस्तोत्रं चत्वारिंशोऽध्यायः ४०

## ॥ एकचत्वारिंशोऽध्यायः ॥

॥ सहस्रानीक उवाच ॥

मार्कण्डेय महाप्राज्ञ सर्वशास्त्रविशारद ॥
प्रादुर्भावं नृसिंहस्य यथावद्वक्तुमर्हसि ॥ १ ॥
वद प्रल्हादचरितं विस्तरेण ममानघ ॥
धन्या वयं महायोगिन् त्वत्प्रसादान्महामुने ॥२॥
सुधां पिबामो दुर्लभ्यां धन्याः श्रीशकथाभिधाम ॥

॥ मार्कण्डेय उवाच ॥

पुरा हिरण्यकशिपोस्तपोऽर्थं गच्छतो वनम् ३ दिग्दाहो भूमिकम्पश्च जातस्तस्य महात्मनः । वारितो बन्धुभिर्भृत्यैर्मित्रैश्च हितकारिभिः ४ शकुना विगुणा राजन् जातास्तच्च न शोभनम् । त्रैलोक्याधिपतिस्त्वं हि सर्वे देवाः पराजिताः ५ तवास्ति न भयं सौम्य किमर्थं तप्यते तपः । प्रयोजनं न पश्यामो वयं बुद्ध्या समन्विताः ६ यो भवेन्न्यूनकामो हि तपश्चर्यां करोति सः । एवं तैर्वार्यमाणोऽपि दुर्मदो मदमोहितः ७ यातः कैलासशिखरं द्वित्रैर्मित्रैः परिवृतः । तस्य संतप्यमानस्य तपः परमदुष्करम् ८ चिन्ता जाता महीपाल विरिंचेः पद्मजन्मनः । किं करोमि कथं दैत्यस्तपसो विनिवर्तते ९ इति चिन्ताकुलस्यैव ब्रह्मणोऽङ्गसमुद्भवः । प्रणम्य प्राह भूपाल नारदो मुनिसत्तमः १०

---

१ इत्यतो नरसिंह प्रादुर्भावचरितं ' ग ' पुस्तके नहि ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ नारद उवाच ॥

किमर्थं खिद्यते तात नारायणपरायण ॥
येषां मनसि गोविन्दस्ते वै नार्हन्ति शोचितुम् ॥ ११
अहं तं वारयिष्यामि तप्यन्तं दितिनन्दनम् ॥
नारायणो जगत्स्वामी मतिं मे सम्प्रदास्यति ॥१२॥

॥ मार्कण्डेय उवाच ॥

इत्युक्त्वाऽऽनम्य पितरं वासुदेवं हृदि स्मरन् । प्रयातः पर्वतेनैव सार्धं स मुनिपुङ्गवः १३ कलविङ्कौ तु तौ भूत्वा कैलासं पर्वतोत्तमम् । यत्रास्ते दितिजः श्रेष्ठो द्वित्रैर्मित्रैः परिवृतः १४ कृतस्नानो मुनिस्तत्र वृक्षशाखासमाश्रितः ॥ शृण्वतस्तस्य दैत्यस्य प्राह गम्भीरया गिरा १५ नमोनारायणायेति पुनःपुनरुदारधीः । त्रिवारं प्रजपित्वा वै नारदो मौनमाश्रितः १६ तच्छ्रुत्वा वचनं तस्य कलविङ्कस्य सादरः । हिरण्यकशिपुर्दैत्यः क्रुद्धश्चापं समाददे १७ बाणं धनुषि संधाय यावन्मुञ्चति तौ प्रति । तावदुड्डीय तौ भूप गतौ नारदपर्वतौ १८ सोपि क्रोधपरीताङ्गो हिरण्यकशिपुस्तदा । सक्त्वा तमाश्रमं भूयो नगरं स्वं महीपते १९ तस्यापि भार्या सुश्रोणी कयाधूर्नाम नामतः तदा रजस्वला भूत्वा स्नाताऽभूद्दैवयोगतः २० रात्रावेकान्तसमये तया पृष्टः स दैत्यराट् । स्वामिन् यदा तपश्चर्यां कर्तुं गेहाद्वनं गतः २१ तदा त्वयोक्तं वर्षाणामयुतं मे तपस्त्विदम् ॥ तत्किमर्थं महाराज साम्प्रतं सक्तवान्व्रतम् २२
तथ्यं कथय मे नाथ स्नेहात्पृच्छामि दैत्यप ।

॥ हिरण्यकशिपुरुवाच ॥

शृणु चार्वङ्गि मे तथ्यां वाचं व्रतविनाशिनीम् २३ क्रोधस्यातीव जननीं देवानां मुदवर्द्धनीम् । कैलासशिखरे देवि महदानन्दकानने २४ व्याहरन्तौ शुभां वाणीं नमो नारायणेति च ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वारद्वयं त्रयं चेति व्याहृतं वचनं शुभे २५ तेन मे मनसि क्रोधो जातोऽतीव वरानने ॥ कोदण्डे शरमाधाय यावन्मुञ्चामि भामिनि २६ तावत्तौ पक्षिणौ भीतौ गतौ देशान्तरं त्वहम् ॥ त्यक्त्वा व्रतं समायातो भाविकार्यबलेन वै २७

॥ मार्कण्डेय उवाच ॥

इत्युच्यमाने वचने वीर्यद्रावोऽभवत्तदा ॥ ऋतुकाले तु सम्प्राप्ते जातो गर्भस्तदैव हि २८ पुनः प्रवर्तमानस्य गर्भे गर्भस्य धीमतः २९ ॥ नारदस्योपदेशेन वैष्णवः समजायत ३० तदग्रे कथयिष्यामि भूप श्रद्धापरो भव ॥ तस्य सूनुरभूद्भक्तः प्रल्हादो जन्मवैष्णवः ३१ सोवर्धतासुरकुले निर्मलो मलिनाश्रये ॥ यथा कलौ हरेर्भक्तिः पाशसंसारमोचनी ३२ सवर्द्धमानो विरराज बालः सह त्रयीनाथपदेषु भक्त्या ॥ बालोल्पदेहो महतीं महात्मा विस्तारयन् भाति स विष्णुभक्तिम् ॥ ३३ यथा चतुर्थं युगमाथ धर्मकामार्थमोक्षं किल कीर्तिदं हि ॥ स बाललीलासु सहान्यडिम्भैः प्रहेलिकाक्रीडनकेषु नित्यम् ३४ कथाप्रसङ्गेषु च कृष्णमेव प्रोवाच यस्मात्स हि तत्स्वभावः । इच्छञ्छिशुत्वेपि विचित्रकारी व्यवर्द्धतेशस्मरणाऽमृताशः ३५ तं पञ्चवर्क्षं दैत्येन्द्रः कदाचित् स्त्रीवृतः खलः । बालं गुरुगृहायातं ददर्श स्वायतेक्षणम् ३६ गृहीत्वा तु करे पुत्रं पट्टिकायाः सुशोभनम् ॥ मूर्ध्निचक्राङ्किता पट्टी कृष्णनामाङ्किताऽदरात् ३७ तमाहूय मुदाविष्टो लालयन् प्राह पुत्रकम् ॥ पुत्र ते जननी नित्यं सुधीर्मे पुत्रशंसनि ३८ अथ तद्वद यत्किंचिद्गुरुवेश्मनि शिक्षितम् ॥ विचार्यानन्दजननं सम्यगायाति तद्वद ३९ अथाह पितरं हर्षात् प्रल्हादो जन्मवैष्णवः ॥ गोविन्दं त्रिजगद्वन्द्यं प्रभुं नत्वा ब्रवीमि ते ४० इति शत्रोः स्तवं श्रुत्वा पुत्रोक्तं स्त्रीवृतः खलः । क्रुद्धोपि तं वञ्चयितुं जहासोच्चैः महद्व्रत ४१ आदि



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

इय तनयं प्राह शृणु बाल हितं वचः । रामगोविन्दकृष्णेति
विष्णो माधव श्रीपते ४२ एवं वदन्ति ये सर्वे ते पुत्र मम
वैरिणः ॥ शासितास्तु मयेदानीं त्वयेदं क श्रुतं वचः ॥ ४३
पितुर्वचनमाकर्ण्य धीमानभयसंयुतः । प्रल्हादः प्राह हे आर्य मैवं
ब्रूयाः कदाचन ४४ सर्वैश्वर्यप्रदं मन्त्रं धर्मादिपरिवर्धनम् ।
कृष्णेति यो नरो ब्रूयात् सोऽभयं विन्दते पदम् ४५ कृष्णनि-
न्दासमुत्थस्य अघस्यान्तो न विद्यते । राम माधव कृष्णेति
स्मर भक्त्याऽत्मशुद्धये ४६ गुरवेपि ब्रवीम्येतद्यतो हितकरं
परम् । शरणं व्रज सर्वेशं सर्वपापक्षयङ्करम् ४७ अथाह प्रकट-
क्रोधः सुरारिर्भर्त्सयन् सुतम् । केनायं बालको नीतो दशामेनां
सुमध्यमाम् ४८ धिग् धिक् हाहेति दुःपुत्र किं मे कृतमघं मह-
त् । याहि याहि दुराचार पापिष्ठ पुरुषाधम । उक्त्वेति परितो
वीक्ष्य पुनराह शिशोर्गुरुम् ४९ बध्वा चानीयतां दैत्यैः क्रूरैः क्रू-
रपराक्रमैः । इति श्रुत्वा ततो दैत्याः तमानीय न्यवेदयन् ॥ धी-
मानूचे खलं भूपं देवान्तक परीक्षताम् ५० लीलयैव जितं देव
त्रैलोक्यं निखिलं त्वया । असकृज्जहि रोषेण किं कुद्धस्याल्पके
मयि ५१ इति सामवचः श्रुत्वा द्विजोक्तं प्राह दैत्यराट् ।
विष्णुस्तवं मम सुतं पाप बालमपीपठः ५२ उक्त्वेति तनयं
प्राह राजा साम्नाऽमलं सुतम् । ममात्मजस्य किं जाड्यं तव
चैतद्द्विजैः कृतम् ५३ विष्णुपक्षैर्ध्रुवं धूर्तैमूढ नित्यं परित्यज ।
त्यज द्विजप्रसंगं हि द्विजसंगो ह्यशोभनः ५४ अस्मत्कुलोचितं
तेजो यैर्द्विजैस्तु तिरोहितम् । यस्य यत्संगतिः पुंसो मणिव-
त्स्यात्स तद्गुणः ५५ स्वकुलद्धर्यै ततो धीमान् स्वयूथानेव संश्र-
येत् । मत्सुतस्योचितं त्यक्त्वा विष्णुपक्षीयनाशनम् ५६ स्वयमेव
भजन् विष्णुं मन्द किं त्वं न लज्जसे । विश्वनाथस्य मे सूनु-
र्भूत्वान्यं नाथमिच्छसि ५७ शृणु वत्स जगत्यन्यं कश्चिन्नास्ति

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

निजः प्रभुः । यः शूरः स श्रियं भुंक्ते स प्रभुः स महेश्वरः ५८ स देवः सकलाध्यक्षः यथाहं त्रिजगज्जयी । त्यज जाड्यमतः शौर्यं भजस्व स्वकुलोचितम् ५९ अन्येपि त्वां हनिष्यन्ति वदिष्यन्ति जनास्त्विदम् । असुरोयं सुरांस्तौति मार्जार इव मूषकान् ६० द्वेष्यान् शिखीव फणिनो दुर्निमित्तमिदं ध्रुवम् । लब्ध्वापि महदैश्वर्यं लाघवं यान्त्यबुद्धयः ६१ यथायं मत्सुतः स्तुत्यः स्तावकान् स्तौति नीचवत् । रे मूढ दृष्ट्वाप्यैश्वर्यं मम ब्रूषे पुरो हरिम् ६२ असदृशस्य तु हरेस्तुतिरेषा विडम्बना । इत्युक्त्वा तनयं भूप जातक्रोधो भयानकः ६३ जिह्मं निरीक्ष्य च प्राह तद्गुरुं कम्पयन् रुषा । याहि याहि द्विजपशो साधु शाधि सुतं मम ६४ प्रसाद इत्येष वदन् स विप्रो जगाम गेहं खलराजसेवी । विष्णुं विसृज्यान्वसरच्च दैत्यं किं वा न कुर्युर्भरणाय लुब्धाः ६५ ॥ इति श्रीनरसिंहपुराणे नृसिंहप्रादुर्भावे एकचत्वारिंशोध्यायः ॥ ४१ ॥

---

## ॥ द्विचत्वारिंशोऽध्यायः ॥

सोप्याशु नीतो गुरुवेश्म दैत्यैर्दैत्येन्द्रसूनुर्हरिभक्तिभूषः। अशेषविज्ञानवहेन सार्कं कालेन कौमारमवाप योगी १ प्रायेण कौमारमवाप्य लोकः पुष्णाति नास्तिक्यमसद्रतिं च । तस्मिन्वयस्यस्य बहिर्विरक्तिर्भवत्यभूच्चित्रमजे च भक्तिः २ अथ संपूर्णविद्यं तं कदाचिद्दितिजेश्वरः । आनाय्य प्रणतं प्राह प्रल्हादं विदितेश्वरम् ३ साध्वज्ञाननिधेर्बाल्यान्मुक्तोसि सुरसूदन । इदानीं भ्राजसे भास्वान् नीहारादिव निर्गतः ४ बाल्ये वयं च त्वमिव द्विजैर्जाड्याय मोहिताः। वयसा वर्धमानेन पुत्रैकेवं सुशिक्षिताः ५ तदद्य त्वयि धूर्येहं ससकण्टकताधुरम् । विन्यस्य त्वां चिरवृती सुखी पश्यन् श्रियं तव ६ यदा यदा हि नैपुण्यं पिता पुत्रस्य पश्यति । तदातदाधित्यक्त्वानु महत्सौख्यमवाप्नुयात्

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

७ गुरुश्चातीव नैपुण्यं ममाग्रेऽवर्णयत्तव । न चित्रं पुत्र तत् श्रोतुं किं नु मे वाञ्छतः श्रुती ८ नेत्रयोः शत्रुदारिद्र्यं श्रोत्रयोः सूतसूक्तयः । युद्धव्रणं च गात्रेषु मायिनां च महोत्सवः ९ श्रुत्वेति निकृतिप्रज्ञं दैत्याधिपवचस्ततः । जगाद योगी निःशङ्कं प्रल्हादः प्रणतो गुरुम् १० सूक्तयः श्रोत्रयोः सत्यं महाराजमहोत्सवः । किं तु ता वैष्णवीर्वाचो मुक्त्वा नान्या विचारयन् ११ नीतिः सूक्तिः कथाः श्राव्यं श्राव्यं काव्यं च तद्वचः ॥ यत्र संसृतिदुःखौघकक्षाग्निर्गीयते हरिः १२ अचिन्त्यः स्तूयते यत्र भक्त्या भक्तेप्सितप्रदः । अर्थशास्त्रेण किं तात यत्र संसृतिसन्ततिः १३ शास्त्रश्रमेण किं तात येनात्मैव विहंस्यते । वैष्णवं वाङ्मयं तस्माच्छ्राव्यं सेव्यं च सर्वदा १४ मुमुक्षुभिर्भवक्लेशान्मोचेन्नैव सुखी भवेत् । इति तस्य वचः शृण्वन् हिरण्यकशिपुस्तदा १५ जज्वाल दैत्यराट् तप्तसर्पिरद्भिरिवाधिकम् । प्रल्हादस्य गिरं पुण्यां जनसंसृतिनाशिनीम् १६ नामृष्यतासुरः क्षुद्रो घूको भानुप्रभामिव । परितो वीक्ष्य संप्राह क्रुद्धो दैत्यभटानिदम् १७ हन्यतामेष कुटिलः शस्त्रपातैः सुभीषणैः । उत्कृत्योत्कृत्य मर्माणि रक्षिताऽस्तु हरिः स्वयम् १८ पश्यत्विदानीमेवैष हरिसंस्तवजं फलम् ॥ काकोलकङ्कगृध्रेभ्यो ह्यस्याङ्गं संविभज्यताम् १९ अप्योद्धृतास्त्रं दैत्यास्तर्जयन्तः प्रगर्जितैः । अच्युतस्य प्रियं भक्तं तं जघ्नुः पतिनोदिताः २० प्रल्हादोपि प्रभुं नत्वा ध्यानवज्रं समाददे । अकृत्रिमरसं भक्तं तमित्थं ध्याननिश्चलम् २१ ररक्ष भगवान् विष्णुः प्रल्हादं भक्तदुःखहृत् । अथालब्धपदान्यस्य गात्रे शस्त्राणि रक्षसाम् २२ नीलाब्जशकलानीव पेतुश्छिन्नान्यनेकधा । किं प्राकृतानि शस्त्राणि करिष्यन्ति हरिप्रियम् २३ तापत्रयमहास्त्रौघः सर्वोप्यस्माद्बिभेति वै । पीडयन्ति जनांस्तावत् व्याधयो राक्षसा ग्रहाः २४ यावद्गुहाशयं विष्णुं सूक्ष्मं चेतो न विन्दति । ते तु भग्नास्त्रशकलैः प्रतीपोत्थै-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रितस्ततः २५ हन्यमाना न्यवर्तन्त सद्यः फलदैरिव । न चित्रं विबुधानां तदज्ञानां विस्मयावहम् २६ वैष्णवं बलमालोक्य राजा नूनं भयं दधौ । पुनस्तस्य वधोपायं चिन्तयन् स सुदुर्मतिः २७ समादिशत्समाहूय दंदशूकान् सुदुर्विषान् । अशस्त्रवधयोग्योयमस्मयो हरितोषकृत् २८ तस्माद्भवद्भिरचिराद् हन्यतां गरलायुधाः । हिरण्यकशिपोः श्रुत्वा वचनं ते भुजङ्गमाः ॥ तस्याज्ञां जगृहुर्मूर्ध्ना प्रहर्षाद्देशवर्तिनः २९ अथ ज्वलद्दशनकरालदंष्ट्रिणः स्फुटस्फुरद्दशसहस्रभीषणाः अकर्षका हरिमहिस्वकर्षकाः हरिप्रियं द्रुततरमापतन्रुषा ३० गरायुधास्त्वचमपि भेत्तुमल्पिकां वपुष्यजस्मृतिबलदुर्भिदकृते । अलं न ते हरिवपुषं तु केवलं विदश्य तं निजदशनैर्विना कृताः ३१ ततः स्रवत्क्षतजविपण्णमूर्तयो द्विधाकृताद्भुतदशना भुजङ्गमाः । समेत्य तेदितिजपतिं व्यजिज्ञपन् विनिःश्वसन् मचलफणा भुजङ्गमाः ३२ प्रभो महीध्रानपि भस्मशेषान् तस्मिन्नशक्तास्तु तदेव वध्याः । महानुभावस्य तवात्मजस्य वधे नियुक्त्वा दशनैर्विना कृताः ३३ इत्थं द्विजिह्वाः कठिनं निवेद्य ययुर्विसृष्टाः प्रभुणाऽकृतार्थाः ॥ विचिन्तयन्त पृथुविस्मयेन प्रल्हादसामर्थ्यनिदानमेव ३४

॥ मार्कण्डेय उवाच ॥

अथासुरेशः सचिवैर्विचार्य निश्चित्य सूनुं तमदण्डसाध्यम् । आहूय साम्ना प्रणतं जगाद वाक्यं सदा निर्मलपुण्यचित्तम् ॥ ३५ प्रल्हाद दुष्टोपि निजाङ्गजातो न वध्य इत्यद्य कृपा ममाभूत् ॥ ततस्तूर्णं समागत्य दैत्यराजपुरोहिताः ३६ मूढाः प्रांजलयः प्राहुर्द्विजाः शास्त्रविशारदाः । त्रैलोक्यं कम्पते देव भृशं त्वय्यभिकाङ्क्षिणि ३७ प्रल्हादस्त्वां न जानाति क्रुद्धं स्वल्पो महाबलम् । तदलं देवरोषेण दयां कर्तुं त्वमर्हसि ३८ पुत्रः कुपुत्रतामेति न मातापितरौ कदा । उक्त्वेति कुटिलप्रज्ञं दैत्यं दैत्य-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पुरोहिताः ३९ आदाय तदनुज्ञां तां प्रल्हादं धीधनं ययुः ४०
इति श्रीनरसिंहपुराणे नरसिंहप्रादुर्भावे द्विचत्वारिंशोऽध्यायः ४२

---

## ॥ त्रिचत्वारिंशोऽध्यायः ॥

### ॥ मार्कण्डेय उवाच ॥

अथ स गुरुगृहेपि वर्तमानः सकलविदच्युतसक्तपुण्यचेताः । जड इव विचचार बाह्यकृत्ये सततमनन्तमयं जगत्प्रपश्यन् १ सह गुरुकुलवासिनः कदाचित् श्रुतिविरता ह्यवदन्समेत्य बालाः । तव चरितमहो विचित्रमेतत् क्षितिपतिपुत्र यतोस्यभोगलुब्धः २ हृदि किमपि विचिन्त्य हृष्टरोमा भवसि सदा च वदाङ्ग यद्य-गुह्यम् । इति गदितवतः स मन्त्रिपुत्रानवददिति नृप स सर्ववत्स-लत्वात् ३ शृणुत सुमनसः सुरारिपुत्रायदहमनन्यरतिर्वदामि पृष्टः । धनजनतरुणीविलासरम्यो भवविभवः किल भाति यस्त-मेनम् ४ विमृशत सुबुधैरुतैष सेव्यो द्रुतमथ वा परिवर्ज्य एव दूरात् । प्रथममिह विचार्यतां यदम्बाजठरगतैरनुभूयते सुदुःखम् ५ सुकुटिलतनुभिस्तदग्नितप्तै विविधपुराजनना नि संस्मराद्भिः ॥ कारागृहे दस्युरिवास्मि बद्धो जरायुणा विट्कृमिमूत्रगेहे । पश्या-मि गर्भेपि सकृन्मुकुन्दपादाब्जयोरस्मरणेन कष्टम् ६ तस्मात्सुखं गर्भशयस्य नास्ति बाल्ये तथा यौवनवार्द्धके वा । एवं भवो दुः-खमयः सदैव सेव्यः कथं दैत्यसुताः प्रबुद्धैः । एवं भवेस्मिन् प-रिमृग्यमाणा वीक्षामहे नैव सुखांशलेशम् ७ यथा यथा साधु-विचारयामस्तथातथा दुःखतरं च विद्मः । तस्माद्भवेस्मिन् किल चारुरूपे दुःखाकरे नैव पतन्ति सन्तः ८ पतन्त्यथोऽतत्त्वविदः सुमूढा वन्हौ पतङ्गा इव दर्शनीये । यद्यस्ति नान्यच्छरणं सुखाय युक्तं तदैतत्पतनं सुखाभे ९ अविन्दतामन्नरूद्धौ कृशानां युक्तं हि पिण्याकतुषादिभक्षणम् । अस्ति त्वजं श्रीपतिपादपद्मद्वन्द्वा-र्चनप्राप्यमनन्तमाद्यम् १० अक्लेशितः प्राप्यमिदं विसृज्य महा-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सुखं योन्यसुखानि वाञ्छेत् । राज्यं करस्थं स्वमसौ विसृज्य भिक्षामटेद्दीनमनाः सुमूढः ११ तच्चार्च्यते श्रीपतिपादपद्मद्वन्द्वं नवस्त्रैर्न धनैः श्रमैर्न । अनन्यचित्तेन नरेण किंनु उच्चार्यते केशव माधवेति १२ एवं भवं दुःखमयं विदित्वा दैत्यात्मजाः साधु हरिं भजध्वम् । एवं जनो जन्मफलं लभेत नोचेद्भवाब्धौ प्रपतेदधोधः १३ तस्माद्भवेस्मिन् हृदि शंखचक्रगदाधरं देवमनन्तमीड्यम् । स्मरंस्तु नित्यं वरदं मुकुन्दं सद्भक्तियोगेन निवृत्तिकामाः १४ अनास्तिकत्वात् कृपया भवद्भ्यो वदामि गुह्यं भवसिन्धुसंस्थाः । सर्वेषु भूतेषु च मित्रभावं भजन्त्वयं सर्वगतो हि विष्णुः १५

॥ कुदैत्यपुत्रा ऊचुः ॥

प्रल्हाद त्वं वयं चापि बालभावान्महामते ॥
षण्डामर्कात्परं मित्रं गुरुं चान्यं न विद्महे ॥१६॥
त्वयैतच्छिक्षितं कुत्र तथ्यं नो वद निस्तुषम् ॥

॥ प्रल्हाद उवाच ॥

यदा तातः प्रयातो मे तपोर्थं काननं महत् १७ तदा चेन्द्रः समागत्य पुरं तस्य रुरोध ह । मृतं विज्ञाय दैत्येन्द्रं हिरण्यकशिपुं तदा १८ इन्द्रो मे जननीं गृह्य प्रयातो मन्मथाग्निना ॥ दह्यमानो महाभागा मार्गे गच्छति सत्वरम् १९ तदा मां गर्भगं ज्ञात्वा नारदो देवदर्शनः ॥ आगत्येन्द्रं जगादोच्चैर्मूढ मुञ्च पतिव्रताम् २० अस्या गर्भे स्थितो योसौ सवै भागवतोत्तमः ॥ तच्छ्रुत्वा नारदवचो मातरं प्रणिपत्य मे २१ विष्णुभक्त्या प्रमुच्याथ गतः स्वं भुवनं हरिः ॥ नारदस्तां समानीय आश्रमं स्वं शुभव्रतः २२ मामुद्दिश्य महाभागामेतद्वै कथितं तदा ॥ तथा मे विस्मृतं नैव बालाभ्यासाद्दनोः सुताः २३ विष्णोश्चानुग्रहेणैव नारदस्योपदेशतः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ मार्कण्डेय उवाच ॥

एकदा गुप्तचर्यायां गतोसौ राक्षसाधिपः २४ शृणोति रात्रौ नगरे जयरामेति कीर्तनम्। अवैत्पुत्रकृतं सर्वं बलवान् दानवेश्वरः २५ अथाहूयाह दैत्येन्द्रः क्रोधान्धः स पुरोहितान्। रे रे क्षुद्रद्विजा यूयं मतिज्ञा मूर्खतां गताः २६ प्रल्हादोयं मृषालापान् वक्त्यान्यान् पाठयति च। इति निर्भर्त्स्य तान् विप्रान् श्वसन् राजाऽविशद्गृहम् २७ न च पुत्रवधे चिन्तां जहौ स्ववधकारिणीम्। आसन्नमरणोमर्षः कृत्यमेको विमृश्य सः ॥ २८ अकृत्यमेव दैत्यादीन् आहूयोपादिशद्रहः। अद्य क्षपायां प्रल्हादं प्रसुप्तं दुष्टमुल्बणैः २९ नागपाशैर्दृढं बध्द्वा मध्ये निक्षिपताम्बुधेः। तदाज्ञां शिरसादाय दद्दशुस्तमुपेत्यते ३० रात्रिप्रियं समाधिस्थं प्रबुद्धं सुप्तवत् स्थितम्। संछिन्नरागलोभादिमहाबन्धं क्षपाचराः ३१ बबन्धुस्तं महात्मानं फल्गुभिः सर्परज्जुभिः ॥ गरुडध्वजभक्तं तं बध्द्वाऽहिभिरबुद्धयः ३२ जलशायिप्रियं नीत्वा जलराशौ निचिक्षिपुः। बलिनस्तेऽचलान् दैत्या तस्योपरि निधाय च ३३ शशंसुस्तं प्रियं राज्ञे द्रुतं तान् सोप्यमानयत्। प्रल्हादं चाब्धिमध्यस्थं तमौर्वाग्निमिवापरम् ३४ ज्वलन्तं तेजसा विष्णोर्ग्राहा भूरिभियात्यजन् ॥ स चाभिन्नचिदानन्दसिन्धुमध्यः समाहितः ३५ न वेद बद्धमात्मानं लवणाम्बुधिमध्यगम्। अथ ब्रह्मामृताम्भोधिमये स्वस्मिन् स्थिते मुनौ ३६ ययौ क्षोभं द्वितीयाब्धिप्रवेशादिव सागरः। क्लेशान् क्लेशानिवोद्धूय प्रल्हादमथ वीचयः ३७ निन्युस्तीरे्प्लवोम्भोधेः गुरूक्तय इवाम्बुधिः॥ ध्यानेन विष्णुभूतं तं भगवान्वरुणालयः ३८ विन्यस्य तीरे रत्नानि गृहीत्वा द्रष्टुमाययौ। तावद्भगवतादिष्टः प्रहृष्टः पन्नगाशनः ३९ बन्धनादीन् समभ्येत्य भक्षयित्वा पुनर्ययौ। अथाबभासे प्रल्हादं गम्भीरध्वनिरर्णवः ४० प्रणम्य दिव्यरूपः सन् समाधिस्थं हरेः प्रियम्।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

प्रल्हाद भगवद्भक्त पुण्यात्मन्नर्णवोस्म्यहम् ४१ चक्षुर्भ्यामिथ मां दृष्ट्वा पावयार्थिनमागतम् । इत्यम्बुधिगिरः श्रुत्वा स महात्मा हरेः प्रियः ४२ उद्वीक्ष्य सहसा देवं तं नत्वाहासुरात्मजः । कदागतं भगवता तमथाम्बुधिरब्रवीत् ४३ योगिन्नज्ञातवृत्तस्त्वमपराद्धं तवासुरैः । बद्धस्त्वमहिभिर्दैत्यैर्मयिक्षिप्तोद्य वैष्णव ४४ ततस्तूर्णं मया तीरे न्यस्तस्त्वं फणिनश्च तान् । इदानीमेव गरुडो भक्षयित्वा गतो महान् ४५ महात्मन्ननुगृह्णीष्व त्वं मां सत्संगमर्थिनम् । गृहाणेमानि रत्नानि पूज्यस्त्वं मे हरिर्यथा ४६ यद्यप्येतैर्न ते कृत्यं रत्नैर्दास्याम्यथाप्यहम् । दीपान्निवेदयत्येव भास्करस्यापि भक्तिमान् ४७ त्वमापत्स्वपि घोरासु विष्णुनैव हि रक्षितः । त्वादृशा निर्मलात्मानो न सन्ति बहवोर्कवत् ४८ बहुना किं कृतार्थोस्मि यत्तिष्ठामि त्वया सह । आलपामि क्षणमपि नेक्षे ह्येतत्फलोपमाम् ४९ इत्यब्धिना स्तुतः श्रीशमाहात्म्यवचनैः स्वयम् । ययौ लज्जां प्रहर्षं च प्रल्हादो भगवत्प्रियः ५० प्रतिगृह्य स रत्नानि वत्सलः प्राह वारिधिम् । महात्मन् सुतरां धन्यः शेते त्वयि हि स प्रभुः ५१ कल्पान्तेपि जगत्कृत्स्नं ग्रसित्वा स जगन्मयः । त्वय्येवैकार्णवीभूते शेते किल महात्मनि ५२ लोचनाभ्यां जगन्नाथं द्रष्टुमिच्छामि वारिधे । त्वं पश्यसि सदा धन्यस्तत्रोपायं प्रयच्छ मे ५३ उक्त्वेति पादावनतं तूर्णमुत्थाप्य सागरः । प्रल्हादं प्राह योगीन्द्र त्वं पश्यसि सदा हृदि ५४ द्रष्टुमिच्छस्यथाक्षिभ्यां स्तुहि तं भक्तवत्सलम् । उक्त्वेति सिन्धुः प्रल्हादमात्मनः सजलेऽविशत् ५५ गते नदीन्द्रे स्थित्वैको हरिं रात्रौ स दैत्यजः । भक्त्याऽस्तौदिति मन्वानः तद्दर्शनमसम्भवम् ५६

॥ प्रल्हाद उवाच ॥

वेदान्तवाक्यशतमारुतसंप्रवृद्धवैराग्यवन्हिशिखयो परिताप्यचित्तम् । संशोधयन्ति यदवेक्षणयोग्यतायै धीरः सदैव स कथं-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मम गोचरः स्यात् ५७ मात्सर्यरोषस्मरलोभमोहमदादिभिर्वासु-
हृद्भिःसुषड्भिः । उपर्युपर्याचरणैः सुबद्धमन्धं मनो मे क्क हरिः क्क
वाहम् ५८ यं धातृमुख्या विबुधा भयेषु शान्त्यर्थिनःक्षीरनि-
धेरुपान्तम् । गत्वोत्तमस्तोत्रकृतः कथंचित् पश्यन्ति तं द्रष्टुमहो
ममाशा ५९ अयोग्यमात्मानमितीशदर्शने स मन्यमानः तदना-
प्तिकातरः । उद्वेगदुःखार्णवमग्नमानसः स्रुताश्रुधारो नृप मूर्च्छि-
तोऽपतत् ६० अथ क्षणात्सर्वगतश्चतुर्भुजः शुभाकृतिर्भक्तजनैक-
वल्लभः । दुःस्थं तमाश्लिष्य सुधामयैर्भुजैस्तत्रैव भूपाविरभूद्द-
यानिधिः ६१ स लब्धसंज्ञोथ तदङ्गसङ्गात् उन्मीलिताक्षः स-
हसा ददर्श । प्रसन्नवक्त्रं कमलायताक्षं सुदीर्घबाहुं यमुनासवर्ण-
म् ६२ उदारतेजोमयमप्रमेयं गदारिशंखाम्बुजचारुचिन्हितम् ।
स्थितं समालिङ्ग्य विभुं स दृष्ट्वा प्रकम्पितो विस्मयभीतिहर्षैः
६३ तत् स्वप्नमेवाथ स मन्यमानः स्वप्नेपि पश्यामि हरिं कृता-
र्थम् । इति प्रहर्षार्णवमग्नचेताः स्वानन्दमूर्च्छां स पुनश्च भेजे
६४ ततः क्षितावेव निविश्य नाथः कृत्वा तमङ्के स्वजनैकबन्धुः ।
शनैर्विधुन्वन् करपल्लवेन स्पृशन् मुहुर्मातृवदालिलिङ्ग ६५
ततश्चिरेण प्रल्हादः सन्मुखोन्मीलितेक्षणः । आलुलोक जग-
न्नाथं विस्मयाविष्टचेतसा ६६ ततश्चिरात्तं सम्भाव्य धीरः
श्रीशार्ङ्गशायिनम् । आत्मानं सहसोत्तस्थौ सद्यः सभयसंभ्रमः
६७ प्रणामायापतच्चोर्व्यां प्रसीदेति वदन्मुहुः । संभ्रमात्स
बहुज्ञोपि नान्यां पूजोक्तिमस्मरन् ६८ तमथाभयहस्तेन गदा-
शंखारिधृक् प्रभुः ॥ गृहीत्वा स्थापयामास प्रल्हादं स दया-
निधिः । कराब्जस्पर्शनाल्हादगलदश्रुं सवेपथुम् ६९ भूयोथाल्हा-
दयन् स्वामी तं जगादेति सान्त्वयन् ७० सभयं संभ्रमं वत्स
मद्गौरवकृतं त्यज । नैवं प्रियो मे भक्तेषु स्वाधीनप्रणयी भव
७१ नित्यं संपूर्णकामस्य जन्मानि विविधानि मे । भक्तसर्वे-
ष्टदानाय तस्मात्किं ते प्रियं वद ७२ अथ व्यजिज्ञपद्विष्णुं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

प्रह्लादः प्रांजलिर्नमन् । स लौल्यमुत्फुल्लदृशा पश्यन्नेत्रं च तन्मुखम् ७३ नाप्ययं वरदानाय कालो नैष प्रसीद मे । त्वद्दर्शनामृतास्वादादन्तरात्मा न तृप्यति ७४ ब्रह्मादिदेवैर्दुर्लक्ष्यं त्वामेव पश्यतः प्रभो । तृप्तिं नेष्यति मे चित्तं कल्पायुतशतैरपि ७५ नैवमेतद्धितृप्तस्य त्वां दृष्ट्वान्यद्वृणोति किम् । ततः स्मितसुधापूरैः पूरयन् स प्रियं प्रियात् ७६ योजयन्मोक्षलक्ष्म्यैव तं जगाद जगत्पतिः । सत्यं मद्दर्शनादन्यद्वत्स नैवास्ति ते प्रियम् ७७ किंचित्ते दातुमिष्टं मे मत्प्रियार्थं वृणीष्व तत् । प्रह्लादोथाब्रवीद्धीमान् देव जन्मान्तरेष्वपि ७८ दासस्तवाहं भूयासं गरुत्मानिव भक्तिमान् । अथाह नाथः प्रह्लादं सङ्कटं खलिवदं कृतम् ७९ अहं तवात्मदानेच्छुस्त्वं तु भृत्यत्वमिच्छसि । वरानन्यांश्च वरय धीमन् दैत्येश्वरात्मज ८० प्रह्लादोपि पुनः प्राह भक्तकामप्रदं हरिम् । प्रसीद सास्तु मे नाथ त्वद्भक्तिः सात्त्विकी स्थिरा ८१ अनयाथ च त्वां नौमि नृत्यामि त्वत्परः सदा । अथाभितुष्टो भगवान् प्रियमाह प्रियंवदम् ८२ वत्स यद्यदभीष्टं ते तत्तदस्तु सुखी भव । अन्तर्हिते च मय्यत्र मा खिद त्वं महामते ८३ त्वच्चित्तान्नापयास्यामि क्षीराब्धेरिव सुप्रियात् । पुनर्द्वित्रिदिनैस्त्वं मां द्रष्टा दुष्टबोद्यतम् ८४ अपूर्वाविष्कृताकारं नृसिंहं पापभीषणम् । उक्त्वेत्यतः प्रणमतः पश्यतश्चातिलालसम् ८५ अतुष्टस्यैव तस्येशो माययान्तर्दधे हरिः । ततो हठाददृष्ट्वा तं सर्वतो भक्तवत्सलम् ८६ हाहेत्यश्रुप्लुतः प्रोच्य ववन्दे स चिरादिति । श्रूयमाणोथ परितः प्रतिबुद्धजनस्वनम् ८७ उत्थायाब्धितटाद्धीमान् प्रह्लादः स्वपुरं ययौ ८८ अथ दितिजसुतश्चिरं प्रहृष्टः स्मृतिबलतः परितस्तमेव पश्यन् । हरिमनुजगति त्वलं च पश्यन् गुरुगृहमुत्पुलकः शनैरवाप ८९ इति श्रीनरसिंहपुराणे नरसिंहप्रादुर्भावे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

# चतुश्चत्वारिंशोऽध्यायः ।

॥ मार्कण्डेय उवाच ॥

अथागतं ते प्रल्हादं दृष्ट्वा दैत्याः सुविस्मिताः । शशंसुर्दैत्यपतये यैः क्षिप्तः स महार्णवे १ स्वस्थं तमागतं श्रुत्वा दैत्यराडिस्मयाकुलः । आहूयतां च इत्याह क्रोधान्मृत्युवशे स्थितः २ तथासुरैर्दुरानीतः समासीनं स दिव्यदृक् । आसन्नमृत्युं दैत्येन्द्रं ददर्शात्यूर्जितश्रियम् ३ नीलांशुमिश्रमाणिक्यद्युतिच्छन्नविभूषणम् । सधूमाग्निमिव व्याप्तं उच्चासनचितिस्थितम् ४ दंष्ट्रोत्कटैर्घोरतरैर्घनच्छविभिरुद्धवैः । कुमार्गदर्शिभिर्दैत्यैर्यमदूतैरिवावृतम् ५ दूरात्प्रणम्य पितरं प्रांजलिस्तु दशादिते । अथाहाकारणक्रोधः स खलो भर्त्सयन्सुतम् ६ भगवत्प्रियमत्युचैर्मृत्युमेवाश्रयन्निव । मूढ रे शृणु मद्वाक्यमेतदेवान्तिमं ध्रुवम् ७ इतो न त्वां प्रवक्ष्यामि श्रुत्वा कुरु यथेप्सितम् । उक्त्वेति दूतमाकृष्य चन्द्रहासासिमद्भुतम् ८ संभ्रमाद्वीक्षितः सर्वैश्चालयन्नाह तं पुनः । क्व चास्ति मूढ ते विष्णुः स त्वामद्य प्ररक्षतु ९ त्वयोक्तं स हि सर्वत्र कस्मात्स्तम्भे न दृश्यते । यदि पश्यामि तं विष्णुमधुना स्तम्भमध्यगम् १० तर्हित्वां न वधिष्यामि भविष्यसि द्विधान्यथा । प्रल्हादोपि तथा दृष्ट्वा दध्यौ तं परमेश्वरम् ११ पुरोक्तं तद्वचः स्मृत्वा प्रणनाम कृतांजलिः । तावत्प्रस्फुटितस्तम्भो वीक्षितो दैत्यसूनुना १२ आदर्शरूपे दैत्यस्य खड्गजो यः प्रतिष्ठितः । तन्मध्ये दृश्यते रूपं बहुयोजनमायतम् १३ अतिरौद्रं महाकायं दानवानां भयंकरम् । महानेत्रं महावक्त्रं महादंष्ट्रं महाभुजम् १४ महानखं महापादं कालाग्निसदृशाननम् । कर्णान्तकृतविस्तारवदनं चातिभीषणम् १५

१ इतः पुनः कथा 'ग' पुस्तके विद्यते ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

कृत्वेत्थं नारसिंहं तु ययौ विष्णुस्त्रिविक्रमः । नरसिंहः स्तम्भ-
मध्याद् निर्गत्य प्रणनादच १६ निनादश्रवणाद्दैत्या नरसिंह-
मवेष्टयन् । तान् हत्वा सकलांस्तत्र स्वपौरुषपराक्रमात् १७ बभंज
च सभां दिव्यां हिरण्यकशिपोर्नृप । वारयामासुरभ्येत्य नरसिंहं
महाभटाः १८ ते तु राजन् क्षणादेव नरसिंहेन वै हताः
ततः शस्त्राणि वर्षन्ति नरसिंहे प्रतापिनि १९ स तु क्षणेन भग-
वान् हत्वा तद्बलमोजसा ननाद च महानादं दिशः शब्देन
पूरयन् २० अष्टाशीतिसहस्राणि हेतिहस्तान् समादिशत् ।
तेप्यागत्य च तं देवं रुरुधुः सर्वतो दिशम् २१ पुनः सभां बभं-
जासौ हिरण्यकशिपोः शुभाम् ॥ तान्मृतानपि विज्ञाय पुनर-
न्यान्महासुरः २२ हत्वा तानखिलान् युद्धे युध्यमानो ननाद सः
। तान् हतानपि विज्ञाय क्रोधसंरक्तलोचनः २३ ततो हिरण्य-
कशिपुर्निश्चक्राम महाबलः ॥ उवाच च महीपाल दानवान्
बलदर्पितान् २४ हन्यतां हन्यतामेष गृह्यतांगृह्यतामयम् इत्येवं
वदतस्तस्य प्रमुखे तु महासुरान् २५ युध्यमानान् रणे हत्वा
नरसिंहो ननाद च ॥ ततोऽतिदुद्रुवुर्दैत्या हतशेषा दिशो दिश
२६ यावद्धता युध्यमाना दैत्याः कोटिसहस्रशः । नरसिंहेनता
बब भागंगतो र विः २७ शस्त्रास्त्रवर्षचतुरं हिरण्यक शिपुं जवात् ॥
प्रगृह्य तु बलाद्राजन् नरसिंहो महाबलः २८ संध्याकाले गृहद्वा-
रि स्थित्वोरौ स्थाप्य तं रिपुम् ॥ वज्रतुल्यमहोरस्कं हिरण्यकशिपुं
रुषा ॥ २९ नखैकिसलयमिव दारयत्याह सोऽसुरः ॥ " यैत्राख-
ण्डलदन्तिदन्तमुसलान्याखण्डितान्याहवे धारायत्र पिनाकपाणि-
परशोराकुण्ठतामागमत् ॥ तन्मे तावदुरो नृसिंहकरजैर्व्यादीर्यते
साम्प्रतं दैवे दुर्जनतां गते तृणमपि प्रायोप्यवज्ञायते ३० एवं
वदति दैत्येन्द्रे ददार नरकेसरी ॥ हृदयं दैत्यराजस्य पद्मपत्र-

१ शस्त्रास्त्रवर्षे मुञ्चन ' मिति ' ग ' पुस्तके पाठः । २ ' सभा-
द्वारे ' इति ' ग ' पुस्तके पाठः । ३ ' ददार नरकेसरी ' इति ' ग पुस्तकेपाठः
। ४ यत्राखण्डले ' त्यादि पद्यद्वयं ' क ख ' पुस्तकयोरेव ।



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मिवद्विजः " ३१ शकले द्वे तिरोभूते नखरन्ध्रे महात्मनः ॥ ३२ ततः क्व जातो दुष्टोसाविति देवोतिविस्मितः " ॥ निरीक्ष्य सर्वतो राजन् वृथैतत्कर्म मे ऽभवत् ॥ इति संचिन्त्य राजेन्द्र नरसिंहो महाबलः ३३ व्यधूनयत्करावुच्चैस्ततस्ते शकले नृप ॥ नखरन्ध्रान्निपतिते भूमौ रेणुसमे हरिः ३४ दृष्ट्वा संजातसंरोषो जहास परमेश्वरः ॥ पुष्पवर्षं च वर्षन्तो नरसिंहस्य मूर्धनि ३५ देवाः सब्रह्मकाः सर्वे आगता प्रीतिसंयुताः ॥ आगत्य पूजयामासुर्नरसिंहं परं प्रभुम् ३६ ब्रह्मा च दैत्यराजानं प्रह्लादमभिषेचयत् ॥ धर्मे रतिः समस्तानां जनानामभवत्तदा ३७ इन्द्रोपि सर्वदेवैस्तु हरिणा स्थापितो दिवि ॥ नरसिंहोपि भगवान् सर्वलोकहिताय वै ३८ श्रीशैलशिखरं प्राप्य विश्रुतः सुरपूजितः ॥ 'स्थितो भक्तहितार्थाय अभक्तानां क्षयाय च ' ३९ इत्येतन्नरसिंहस्य महात्म्यं यः पठेन्नरः ॥ शृणोति वा नृपश्रेष्ठ मुच्यते सर्वपातकैः ४० 'नरो वा यदि वा नारी शृणोत्याख्यानमुत्तमम् ॥ वैधव्याद्दुःखशोकाच्च दुष्टसङ्गात्प्रमुच्यते ४१ दुःशीलोपि दुराचारो दुःप्रजो दोषकर्मकृत् ॥ धर्मिष्ठो दानभोगीच शृण्वञ्छुद्धो भवेन्नरः ४२ ' हरिः सुरेशो नरलोकपूजितो हिताय लोकस्य चराचरस्य ॥ कृत्वा विरूपं च पुरात्ममायया हिरण्यकं दुःखकरं नखैश्छिनत् ४३ इति श्रीनरसिंहपुराणे नरसिंहप्रादुर्भावो नाम चतुश्चत्वारिंशोऽध्यायः ४४

## ॥ पञ्चचत्वारिंशोऽध्यायः ॥

॥ मार्कण्डेय उवाच ॥

शृणु राजन् समासेन वामनस्य पराक्रमम् ॥ बलियागे पुरा येन हता दैत्याः सहस्रशः १ विरोचनसुतः पूर्वं महाबलपराक्रमः ॥ त्रैलोक्यं बुभुजे जित्वा देवानिन्द्रपुरोगमान् २ ततः कृशतरा

१ इदमर्धं 'क ख' पुस्तकयोः न विद्यते । २ इदमर्धं ग ' पुस्तके न । ३ ' नरेत्यादि श्लोकद्वयं ख ग ' पुस्तकयोर्न ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

देवा बभूवुस्तेन खण्डिताः । इन्द्रं कृशतरं दृष्ट्वा नष्टराज्यं नृपो त्तमः ३ अदितिर्देवमाता या साऽतप्यत परमं तपः ॥ तुष्टाव वाग्भिरिष्टाभिः प्रणिपत्य जनार्दनम् ४ ततःस्तुत्याभिसन्तुष्टो देवदेवो जनार्दनः ॥ स्थित्वा तत्पुरतो वाचमुवाच मधुसूदनः ५ तव पुत्रो भविष्यामि सुभगे बलिबन्धनः ॥ इत्युक्त्वा तां गतो विष्णुः स्वगृहं सा समाययौ ६ ततः कालेन सा गर्भमवाप नृप कश्यपात् ॥ अयाचत स विश्वेशो भगवान् वामनाकृतिः ७ तस्मिञ्जाते समागत्य ब्रह्मा लोकपितामहः ॥ जातकर्मादिकाः सर्वाः क्रियास्तत्र चकार वै ८ कृतोपनयनो देवो ब्रह्मचारी स नातनः ॥ अदितिं चाप्यनुज्ञाप्य यज्ञशालां बलेर्ययौ ९ गच्छतः पादविक्षेपाच्चचाल सकला मही ॥ यज्ञभागान्न यच्छन्ति दान-वाश्च बलेर्मखात् १० प्रशान्ताश्चाग्नयस्तत्र ऋत्विजो मन्त्रतश्च्युता ॥ विपरीतमिदं दृष्ट्वा शुक्रमाह महाबलः ११ न गृह्णन्ति मुने कस्माद्धविर्भागं महासुराः ॥ कस्माच्च वह्नयः शान्ताः कस्माद्भू श्चलति द्विज १२ कस्माच्च मन्त्रतो नष्टा ऋत्विजः सकला अमी ॥ इत्युक्तो बलिना शुक्रो दानवेन्द्रं वचोऽब्रवीत् १३

॥ शुक्र उवाच ॥

हे बले शृणु मे वाक्यं त्वया देवा निराकृताः ॥ तेषां राज्य-प्रदानाय अदित्यामच्युतोऽसुर १४ देवदेवो जगद्योनिः संजातो वामनाकृतिः ॥ सत्वागच्छति ते यज्ञं तत्पादन्यासकम्पिता १५ चलतीयं मही सर्वा तेनाद्यासुरभूपते ॥ तत्संनिधानादसुरा न गृह्णन्ति हविर्मखे १६ तवाग्नयोपि वै शान्ता वामनागमनाद्धि भो ॥ ऋत्विजश्च न भासन्ति होममन्त्रा बलेऽधुना १७ असुराणां श्रियो हन्ति सुराणां भूतिरुत्तमा ॥ इत्युक्तः स बलिः प्राह शुक्रं नीतिमतां वरम् १८ शृणु ब्रह्मन् वचो मेत्व मागते वामने मखे ॥ यन्मया चाद्य कर्तव्यं वामनस्यास्य धर्मितः १९ तन्मे वद महाभाग त्वं हि नः परमो गुरुः ॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ मार्कण्डेय उवाच ॥

इति संचोदितः शुक्रः स राज्ञा बलिना नृप २० तमुवाच बलिं वाक्यं ममापि शृणु साम्प्रतम् ॥ देवानामुपकाराय भवतां संक्षयाय च २१ सनूनमायाति बले तव यज्ञे न संशयः ॥ आगते वामने देवे त्वया तस्य महात्मनः २२ प्रतिज्ञा नैव कर्तव्या ददाम्येतत्तवेति वै ॥ इति श्रुत्वा वचस्तस्य बलिर्बलवतां वरः २३ उवाच तां शुभां वाणीं शुक्रमात्मपुरोहितम् ॥ आगते वामने शुक्र यज्ञे मे मधुसूदने २४ न शक्यते प्रतिख्यातुं दानं प्रति मया गुरो ॥ अन्येषामपि जन्तूनामित्युक्तं ते मयाधुना २५ किं पुनर्वासुदेवस्य आगतस्य तु शार्ङ्गिणः ॥ त्वया विघ्नो न कर्तव्यो वामनेत्रागते द्विज २६ यद्यद्रव्यं प्रार्थयते तत्तद्रव्यं ददाम्यहम् ॥ कृतार्थोहं मुनिश्रेष्ठ यद्यागच्छति वामनः २७ इत्येवं वदतस्तस्य यज्ञशालां स वामनः ॥ आगत्य प्रविवेशाथ प्रशशंस बलेर्मखम् २८ तं दृष्ट्वा सहसा राजन् राजा दैत्याधिपो बलिः ॥ उपचारेण संपूज्य वाक्यमेतदुवाच ह २९ यद्यत्प्रार्थयसे मां त्वं देवदेव धनादिकम् ॥ तत्सर्वं तव दास्यामि मां याचस्वाद्य वामन ३० इत्युक्तो वामनस्तत्र नृपेन्द्र बलिना तदा ॥ याचयामास देवेशो भूमेर्देहि पदत्रयम् ३१ ममाग्निशरणार्थाय न मेऽर्थोऽस्ति प्रयोजनम् ॥ इत्युक्तो वामनेनाथ बलिः प्राह च वामनम् ३२ पदत्रयेण चेत्तृप्तिर्मया दत्तं पदत्रयम् ॥ एवमुक्ते तु बलिना वामनो बलिमब्रवीत् दीयतां मे करे तोयंयदि दत्तं पदत्रयम् ॥ इत्युक्तो देवदेवेन तदा तत्र स्वयं बलिः ३३ सजलं हेमकलशं गृहीत्वोत्थाय भक्तितः ॥ यावत्स वामनकरे तोयं दातुमुपस्थितः ३४ तावच्छुक्रः कलशगो जलधारां रुरोध ह ॥ ततश्च वामनः क्रुद्धः पवित्राग्रेण सत्तम ॥ ३५ उदके कलशद्वारि तच्छु-

१ 'अपीपयत्' इति 'ग' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

काक्षिमवेधयत् ॥ ततो व्यपगतः शुक्रो विद्धैकाक्षो नरोत्तम ३६
तोयधारा निपतिता वामनस्य करे पुनः ॥ करे निपतिते तोये
वामनो ववृधे क्षणात् ३७ पादेनैकेन विक्रान्ता तेनैव सकलामही
॥ अन्तरिक्षं द्वितीयेन द्यौस्तृतीयेन सत्तम ३८ अनेकान् दान-
वान् हत्वा हृत्त्वा त्रिभुवनं बलेः ॥ पुरन्दराय त्रैलोक्यं दत्वा
बलिमुवाच ह ४० यस्मात्ते भक्तितो दत्तंतोयमद्य करे मम ॥
तस्मात्ते साम्प्रतं दत्तं पातालतलमुत्तमम् ४१ तत्र गत्वा महाभा
ग भुंक्ष्व त्वं मत्प्रसादतः३९वैवस्वतेऽन्तरेतीते पुनरिन्द्रो भविष्य-
सि ४२ प्रणम्य च ततो गत्वा तलं भोगमवाप्तवान् ४३ शुक्रो-
पि स्वर्गमारुह्य प्रसादाद्वामनस्य वै ॥ समागतस्त्रिभुवनं राजन्
देवसमन्वितः ४४ यः स्मरेत्प्रातरुत्थाय वामनस्य कथामिमाम् ॥
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ४५ इत्थं पुरा वामनरू-
पमास्थितो हरिर्बलेर्हृत्य जगत्रयं नृप ॥ कृत्वा प्रसादंच दिवौ-
कसाम्पतेदत्वा त्रिलोकं स ययौ महोदधिम् ४६ इति श्रीनर-
सिंहपुराणे वामनप्रादुर्भावः पञ्चचत्वारिंशोऽध्यायः ४५

---

## षट्चत्वारिंशोऽध्यायः ।

॥ मार्कण्डेय उवाच ॥

अतः परं प्रवक्ष्यामि प्रादुर्भावं हरेः शुभम् ॥ जमदग्नेः पुरा
येन क्षत्रमुत्सादितं शृणु १ पुरा देवगणैर्विष्णुः स्तुतः क्षीरो
दधौ नृप ॥ ऋषिभिश्च महाभागैर्जमदग्नेः सुतोऽभवत् २
पर्शुराम इति ख्यातः सर्वलोकेषु स प्रभुः ॥ दुष्टानां निग्रहं
कर्तुमवतीर्णो महीतले ३ कृतवीर्यसुतः श्रीमान् कार्तवीर्योऽभ
वत् पुरा ॥ दत्तात्रेयं समाराध्य चक्रवर्त्तित्वमाप्तवान् ४ सक

१ 'हित्वा' इति 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

दाचिन्महाभागो जमदग्न्याश्रमं ययौ । जमदग्निस्तु तं दृष्ट्वा चतुरङ्गबलान्वितम् ५ उवाच मधुरं वाक्यं कार्तवीर्यं नृपोत्त मम् ॥ मुच्यतामत्र ते सेना अतिथिस्त्वं समागतः ६ वन्यादिकं मया दत्तं भुक्त्वा गच्छ महामते ॥ प्रमुच्य सेनां मुनिवाक्यगौ-रवात् स्थितो नृपस्तत्र महानुभावः ७ आमन्त्र्य राजानमलंघ्य कीर्त्तिर्मुनिः स धेनुं च दुदोह दोग्ध्रीम् ॥ हस्त्यश्वशाला विवि-धा नराणां गृहाणि चित्राणि च तोरणानि ८ सामन्तयोग्यानि शु-भानि राजन् संप्रेच्छतां यानि सुकाननानि ॥ गृहं वरिष्ठं बहुभूमि कं पुन समन्वितं साधुगणैरुपस्करैः ९ दुग्ध्वा प्रकल्पन् मुनिराह पार्थिवं गृहं कृतं ते प्रविशेह राजन् ॥ इमे च मन्त्रिप्रवरा जनास्ते गृहेषु दिव्येषु विशन्तु शीघ्रम् १० हस्त्यश्वजात्यश्च विशन्तु शालां भृत्याश्च नचेषु गृहेषु सन्तु ॥ इत्युक्तमात्रे मुनिना नृ-पोऽसौ गृहं वरिष्ठं प्रविवेश राजा ११ अन्येषु चान्येषु गृहेषु संस्थितो मुनिः पुनः पार्थिवमाबभाषे ॥ स्नानप्रदानार्थमिदं मयौ ते प्रकल्पितं स्त्रीशतमुत्तमं नृप १२ स्नाहि त्वमद्यार्त्रं यथा प्रकामं यथा सुरेन्द्रो दिवि नृत्यगीतैः ॥ स स्नातवांस्तत्र सुरेन्द्रवन्नृपो गीत्यादिशब्दैर्मधुरैश्च वाद्यैः १३ स्नातस्य तस्याशु शुभे च वस्त्रे ददौ मुनिर्भूप विभूषिते द्वे ॥ परिधाय वस्त्रं च कृतो त्तरीयः कृतक्रियो विष्णुपूजां चकार १४ मुनिश्च दुग्ध्वान्न मयं महागिरिं नृपाय भृत्याय च दत्तवानसौ ॥ यावत्स राजा बुभुजे सभृत्यस्तावच्च सूर्यो गतवान् नृपास्तम् १५ रात्रौ च गीतादिविनोदयुक्तः शेते स राजा मुनिनिर्मिते गृहे १६ ततः

---

१ ' महाभोग ' इति ' ख ' पुस्तके । २ ' समानयोग्यानि ' इति ' ग ' पुस्तके पाठः । ३ ' ०मद्यातु ' ' ०उत्तमन्ते ' इति ' क ख ' पुस्तकयोः । ४ त्वमद्यान्न ' इति ' ख ' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

प्रभाते विमले स्वप्नलब्धमिवाभवत् ॥ भूमिभागं ततः कंचिद्दृष्ट्वासौ चिन्तयन्नृपः १७ किमियं तपसः शक्तिर्मुनेरस्य महात्मनः ॥ सुरभ्या वा महाभाग त्वं ब्रवीहि पुरोहित १८ इत्युक्तः कार्तवीर्येण तमुवाच पुरोहितः ॥ मुनेः सामर्थ्यमप्यस्ति सिद्धिश्चेयं हि गोर्नृप १९ तथापि सा न हर्तव्या त्वया लोभान्नराधिप ॥ यस्त्वेतां हर्तुमिच्छेद्वै तस्य नाशो ध्रुवं भवेत् २० अथ मन्त्रिवरः प्राह ब्राह्मणो ब्राह्मणप्रियः ॥ राजकार्यं न पश्येद्वै स्वपक्षस्यैव पोषणात् २१ हे राजंस्त्वयि तिष्ठन्ति गृहाणि विविधानि च ॥ तथा सुवर्णपात्राणि शयनादीनि च स्त्रियः २२ तां धेनुं प्राप्य राजेन्द्र लीयमानानि तत्क्षणात् ॥ अस्माभिस्तत्र दृष्टानि नीयतां धेनुरुत्तमा २३ तवेयं योग्या राजेन्द्र यदीच्छसि महामते ॥ गत्वाहमानयिष्यामि आज्ञां मे देहि भूभुज २४ इत्युक्तो मन्त्रिणा राजा तथेत्याह नृपोत्तम ॥ सचिवस्तत्र गत्वाथ सुरभिं हर्तुमारभत् २५ वारयामास तं मन्त्रिं जमदग्निः समन्ततः राजयोग्यामिमां ब्रह्मन् देहि राज्ञे महामते २६ त्वं तु शाकफलाहारी किं धेन्वा ते प्रयोजनम् ॥ इत्युक्त्वा तां बलाद्धृत्वा नेतुं मन्त्री प्रचक्रमे ॥ पुनः सभार्यः समुनिर्वारयामास तं नृपम् ॥ ततो मन्त्री सुदुष्टात्मा मुनिं हत्वा तु तं नृप २८ ब्रह्महा नेतुमारेभे वायुमार्गेण सा गता ॥ राजा च क्षुब्धहृदयो ययौ माहिष्मतीं पुरीम् २९ मुनिपत्नी सुदुःखार्त्ता रोदयन्ती भृशं तदा । त्रिःसप्तकृत्वः स्वां कुक्षिं ताडयामास पार्थिव ३० तच्छृण्वन्नागतो रामो गृहीतपरशुस्तदा ॥ पुष्पादीनि गृहीत्वा तु वनान्मातरमब्रवीत् ३१ अलमम्ब प्रहारेण निमित्ताद्विदितं मया ॥ हनि-

---

१ 'जमदग्नेर्वराश्रमात्' इति 'ग' पुस्तके । २ इदमर्धं 'ग' पुस्तके न । ३ 'कुरु चोक्तं यथा नृप' इति 'ग' पुस्तके पाठः । ४ 'बलाद्' हीर्तं ग' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ष्यामि दुराचारमर्जुनं दुष्टमन्त्रिणम् ३२ त्वयैकविंशवारेण यस्मा त्कुक्षिश्च ताडिता ॥ त्रिःसप्तकृत्वस्तस्मात्तु हनिष्ये भुवि पार्थि वान् ३३ इति कृत्वा प्रतिज्ञां स गृहीत्वा परशुं ययौ ॥ माहिष्म तीं पुरीं प्राप्य कार्तवीर्यमथाह्वयत् ३४ युद्धार्थमागतः सोथ विंशैकाक्षौहिणीयुतः । तयोर्युद्धमभूत्तत्र भैरवं रोमहर्षणम् ३५ पिशिताशिजनानन्दं शस्त्रास्त्रशतसंकुलम् ॥ ततः परशुरामोभून्म हाबलपराक्रमः ३६ परं ज्योतिरदीनात्मा विष्णुः कारणमूर्ति-मान् ॥ कार्तवीर्यबलं सर्वमनेकैः क्षत्रियैः सह ३७ हत्वा निपात्य भूमौ तु परमाद्भुतविक्रमः ॥ कार्त्तवीर्यस्य बाहूनां वनं चिच्छेद रोषवान् । छिन्ने बाहुवने तस्य शिरश्चिच्छेद भार्गवः ३८ विष्णु हस्ताद्वधं प्राप्य चक्रवर्ती स पार्थिवः । दिव्यरूपधरः श्रीमान् दिव्यगन्धानुलेपनः ३९ दिव्यं विमानमारुह्य विष्णुलोकमवाप्त वान् ॥ क्रोधात्परशुरामोपि महाबलपराक्रमः ४० त्रिःसप्तकृ-त्वो भूम्यां वै पार्थिवान्निजघान सः ॥ क्षत्रियाणां वधात्तेन भूमेर्भारोवतारितः ४१ भूमिश्च सकला दत्ता कश्यपाय महा-त्मने ॥ इत्येष जामदग्न्याख्यः प्रादुर्भावो मयोदितः ४२ यश्च तच्छृणुयाद्भक्त्या सर्वपापैः प्रमुच्यते ॥ ४३ अवतीर्य भूमौ हरिरेष साक्षात् त्रिःसप्तकृत्वः क्षितिपान्निहत्य सः ॥ क्षात्रं च तेजो प्रविभज्य राजन् रामः स्थितो ह्यापिगिरौ महेन्द्रे ४४ इति श्रीनरसिंहपुराणे परशुरामप्रादुर्भावोनाम षट्चत्वारिंशो ऽध्यायः ॥ ४६ ॥

—०:०—

२ 'त्वया विंशति वारेण' इति 'क ख' पुस्तकयोः । ३ 'अनेकाक्षोहि णी युतः' इति 'ग' पुस्तके पाठः । ४ 'अचिन्त्यात्मा' इति 'क ख' पुस्तकयोः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

## सप्तचत्वारिंशोऽध्यायः

॥ श्रीमार्कण्डेय उवाच ॥

शृणु राजन् प्रवक्ष्यामि प्रादुर्भावं हरेः शुभम् । निहतो रावणो येन सगणो देवकण्टकः १ ब्रह्मणो मानसः पुत्रः पुलस्त्यो भून्महामुनिः ॥ तस्य विश्रवसो नाम पुत्रोभूत्तस्य राक्षसः २ तस्माज्जातो महावीरो रावणो लोकरावणः ॥ तपसा महता युक्तः स तु लोकानुपाद्रवत् ३ सेन्द्रा देवा जितास्तेन गन्धर्वाः किन्नरास्तथा ॥ यक्षाश्च दानवाश्चैव तेन राजन्विनिर्जिताः ४ स्त्रियश्चैव सुरूपिण्यो हृतास्तेन दुरात्मना ॥ देवादीनां नृपश्रेष्ठ रत्नानि विविधानि च ५ रणे कुबेरं निर्जित्य रावणो बलदर्पितः ॥ तत्पुरीं जगृहे लङ्कां विमानं चापि पुष्पकम् ६ तस्यां पुर्यां दशग्रीवो रक्षसामधिपोऽभवत् ॥ पुत्राश्च बहवस्तस्य बभूवुरमितौजसः ७ राक्षसाश्च तमाश्रित्य महाबलपराक्रमाः ॥ अनेककोटयो राजन् लङ्कायां निवसन्ति ये ८ देवान् पितॄन्मनुष्यांश्च विद्याधरगणानपि ॥ यक्षांश्चैव ततः सर्वे घातयन्ति दिवानिशम् ९ संत्रस्तं तद्भयादेव जगदासीच्चराचरम् ॥ दुःखाभिभूतमत्यर्थं संबभूव नराधिप १० एतस्मिन्नेव कालेतु देवाः सेन्द्रमहर्षयः ॥ सिद्धा विद्याधराश्चैव गन्धर्वाः किंनरास्तथा ११ गुह्यका भुजगा यक्षा ये चान्ये स्वर्गवासिनः ॥ ब्रह्माणमग्रतः कृत्वा शङ्करं च नराधिप १२ ते ययुर्हतविक्रान्ताः क्षीराब्धेस्तटमुत्तमम् ॥ तत्राराध्य हरिं देवास्तस्थुः प्राञ्जलयस्तदा १३ ब्रह्मा च विष्णुमाराध्य गन्धपुष्पादिभिः शुभैः ॥ प्राञ्जलिः प्रणतो भूत्वा वासुदेवमथास्तुवत् १४

॥ ब्रह्मोवाच ॥

---

१ 'ते पि तेनैव निर्जिता' इति 'ग-' स्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नमः क्षीराब्धिवासाय नागपर्यङ्कशायिने ॥ नमः श्रीकरसंस्पृष्टदिव्यपादाय विष्णवे १५ नमस्ते योगनिद्राय योगान्तर्भाविताय च ॥ तार्क्ष्यासनाय देवाय गोविन्दाय नमो नमः १६ नमः क्षीराब्धिकल्लोलस्पृष्टगात्राय शार्ङ्गिणे ॥ नमोरविन्दपादाय पद्मनाभाय विष्णवे १७ भक्तार्चितसुपादाय नमो योगप्रियाय वै ॥ शुभाङ्गाय सुनेत्राय माधवाय नमोनमः १८ सुकेशाय सुनेत्राय सुललाटाय चक्रिणे ॥ सुवक्त्राय सुकर्णाय श्रीधराय नमो नमः १९ सुवक्षसे सुनाभाय पद्मनाभायवै नमः २० सुभ्रुवे चारुदेहाय चारुदन्ताय शार्ङ्गिणे ॥ चारुजङ्घाय दिव्याय केशवाय नमोनमः २१ सुनखाय सुशान्ताय सुविद्याय गदाभृते ॥ धर्मप्रियाय देवाय वामनाय नमोनमः २२ असुरघ्नाय चोग्राय रक्षोघ्नाय नमो नमः। देवानामार्तिनाशाय भीमकर्मकृते नमः २३ नमस्ते लोकनाथाय रावणान्तकृते नमः ॥

॥ मार्कण्डेय उवाच ॥

इति स्तुतो हृषीकेशस्तुतोष परमेष्ठिनः २४ स्वरूपं दर्शयित्वा तु पितामहमुवाच ह ॥ किमर्थं तु सुरैः सार्द्धमागतस्त्वं पितामह २५ यत्कार्यं ब्रूहि मे ब्रह्मन्यदर्थं संस्तुतस्त्वया ॥ इत्युक्तो देवदेवेन विष्णुना प्रभविष्णुना २६ सर्वदेवगणैः सार्धं ब्रह्मा प्राह जनार्दनम् ॥

॥ ब्रह्मोवाच ॥

नाशितं तु जगत्सर्वं रावणेन दुरात्मना २७ सेन्द्राः पराजिता स्तेन बहुशो रक्षसा विभो ॥ राक्षसैर्भक्षिता मर्त्या यज्ञाश्चापि विदूषिताः २८ देवकन्या हृतास्तेन बलाच्छतसहस्रशः ॥ त्वामृते पुण्डरीकाक्ष रावणस्य वधं प्रति २९ न समर्था यतो देवास्त्वमतस्तद्वधं कुरु ॥ इत्युक्तो ब्रह्मणा विष्णुर्ब्रह्माणमिदमब्रवीत् ३०

---

'१ नरसिंहमये ' ति ' ग ' पुस्तके । २ ॐनमो योगनिद्राय. ' ग 'पुस्तके.

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

शृणुष्वावहितो ब्रह्मन् यद्वदामि हितं वचः। सूर्यवंशोद्भवः श्रीमान् राजासीऽद्भुवि वीर्यवान् ३१ नाम्ना दशरथख्यातस्तस्य पुत्रो भवाम्यहम् ॥ रावणस्य वधार्थाय चतुर्थांशेन सत्तम ३२ स्वांशैर्वानररूपेण सकला देवतागणाः॥ वतार्यन्तां विश्वकर्तः स्यः-देवं रावणक्षयः ३३ इत्युक्तो देवदेवेन ब्रह्मा लोकपितामहः॥ देवाश्च ते प्रणम्याथ मेरुपृष्ठं तदा ययुः ३४ स्वांशैर्वानररूपेण अवतेरुश्च भूतले॥ अथापुत्रो दशरथो मुनिभिर्वेदपारगैः ३५ इष्टिं तु कारयामास पुत्रप्राप्तिकरीं नृपः॥ ततः सौवर्णपात्रस्थं हविरादाय पायसम् ३६ वह्निः कुण्डात्समुत्तस्थौ नूनं देवेन नोदितः॥ आदाय मुनयो मन्त्राच्चक्रुः पिण्डद्वयं शुभम् ३७ दत्ते कौशल्यकैकेय्योर्द्वे पिण्डे मन्त्रमन्त्रिते ॥ ते पिण्डप्राशने काले सुमित्रायाः महामते ३८ पिण्डाभ्यामल्पमल्पं तु सुभागिन्याः प्रयच्छतः॥ ततस्ताः प्राशयामासू राजपत्न्यो यथाविधि ३९ पिण्डान् देवकृतात्प्राश्य प्रापुर्गर्भाननिन्दितान् ॥ एवं विष्णुर्दशरथाज्जातस्तत्पत्निषु त्रिषु ४० स्वांशैर्लोकहितायैव चतुर्द्धा जगतीपते ॥ रामश्च लक्ष्मणश्चैव भरतः शत्रुघ्न एव च ४१ जातकर्म्मादिकं प्राप्य संस्कारं मुनिसंस्कृतम् ॥ मन्त्रपिण्डवशाद्योमं प्राप्य चेरुर्यथार्भकाः ४२ रामश्च लक्ष्मणश्चैव सह नित्यं विचेरतुः ॥ जन्मादिकृतसंस्कारौ पितुः प्रीतिकरौ नृप ४३ ववृधाते महावीर्यौ श्रुतिशब्दातिलक्षणौ ॥ भरतः कैकयो राजन् भ्रात्रा सह गृहेऽवसत् ४४ वेदशास्त्राणि बुबुधे शस्त्रशास्त्रं नृपोत्तम ॥

---

१ 'माधुर इति 'ग' पुस्तके पाठः।

२ 'श्रुतिशब्दादिलक्षणौ, इति 'ख' पुस्तके पाठः। ३ भरतश्च महाबाहुः कोशलश्च महावलऽ। विष्णुः सुखं कोशलराजो भ्रात्रा सह गृहेवसन्' इति 'म, पुस्तके (?)।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

एतस्मिन्नेव काले तु विश्वामित्रो महातपाः ४५ यागेन यष्टुमारेभे विधिना मधुसूदनम् ॥ स तु विघ्नेन यागोभूद्राक्षसैर्बहुशः पुरा४६ नेतुं स यागरक्षार्थं संप्राप्तो रामलक्ष्मणौ ॥ विश्वामित्रो नृपश्रेष्ठ तत्पितुर्मन्दिरं शुभम् ४७ दशरथस्तु तं दृष्ट्वा प्रत्युत्थाय महामतिः ॥ अर्घ्यपाद्यादिविधिना विश्वामित्रमपूजयत् ४८ स पूजितो मुनिः प्राह राजानं राजसंनिधौ ॥ शृणु राजन् दशरथ यदर्थमहमागतः ४९ तत्कार्यं नृपशार्दूल कथयामि तवाग्रतः ॥ राक्षसैर्नाशितो यागो बहुशो मे दुरासदैः ५० यज्ञस्य रक्षणार्थं मे देहि त्वं रामलक्ष्मणौ ॥ राजा दशरथः श्रुत्वा विश्वामित्रवचो नृप ५१ विषण्णवदनो भूत्वा विश्वामित्रमुवाच ह ॥ बालाभ्यां मम पुत्राभ्यां किं ते कार्यं भविष्यति ५२ अहं त्वया सहागत्यशक्त्या रक्षामि ते मखम् ॥ राज्ञस्तु वचनं श्रुत्वा राजानं मुनिरब्रवीत् ५३ रामोपि शक्यते नूनं सर्वान्नाशयितुं नृप ॥ रामेणैव हि ते शक्या न त्वया राक्षसा नृप ॥ अतो मे देहि रामं च न चिन्तां कर्तुमर्हसि ॥ इत्युक्तो मुनिना तेन विश्वामित्रेण धीमता ॥ तूष्णीं स्थित्वा क्षणं राजा मुनिवर्यमुवाच ह ५४ यद्ब्रवीमि मुनिश्रेष्ठ प्रसन्नस्त्वं निबोध मे ॥ राजीवलोचनं राममहं दास्ये सहानुजम् ५५ किं त्वस्य जननी ब्रह्मन् अदृष्ट्वैनं मरिष्यति । अतो हं चतुरङ्गेण बलेन सहितोमुने५६आगत्य राक्षसान् हन्मीत्येवं मे मनसि स्थितम् । विश्वामित्रः पुनः प्राह राजानममितौजसम् ५७ नाज्ञो रामो नृपश्रेष्ठ स सर्वज्ञः समः क्षमः । शेषनारायणावेतौ तव पुत्रौ न संशयः ५८ दुष्टानां निग्रहार्थाय शिष्टानां पालनाय च । अवतीर्णौ न सन्देहो गृहे तव नराधिप ५९ [१]मात्रा न त्वया राजन् शोकः कार्योत्र चाण्वपि । निःक्षेपे च महाराज अर्पयिष्यामि ते सुतौ ६० इत्युक्तो दश-

१ 'मन्मरणे त्वया राजन्न शोकः कार्य एव । ' इति ' म 'पुस्तके पाठः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रथस्तेन विश्वामित्रेण धीमता । तच्छापभीतो मनसा नीयतामित्यभाषत ६१ कृच्छ्रात्पित्रा विनिर्मुक्तं राममादाय सानुजम् । ततः सिद्धाश्रमं राजन् स प्रतस्थे सकौशिकः ६२ तं प्रस्थितमथालोक्य राजा दशरथस्तदा । अनुव्रज्याब्रवीदेतद्वचो दशरथस्तदा ६३ अपुत्रोऽहं पुरा ब्रह्मन् बहुभिः काम्यकर्मभिः । मुनिप्रसादादधुना पुत्रवानस्मि सत्तम ६४ मनसा तद्वियोगं तु न शक्ष्यामि विशेषतः । त्वमेव जानासि मुने नीत्वा शीघ्रं प्रयच्छ मे ६५ इत्येवमुक्तो राजानं विश्वामित्रोऽब्रवीत्पुनः । समाप्तयज्ञश्च पुनर्नेष्ये रामं च लक्ष्मणम् ६६ सत्यपूर्वं तु दास्यामि न चिन्तां कर्तुमर्हसि । इत्युक्तः प्रेषयामास रामं लक्ष्मणसंयुतम् ६७ अनिच्छन्नपि राजासौ मुनिशापभयान्नृपः । विश्वामित्रस्तु तौ गृह्य अयोध्याया ययौ शनैः ६८ सरय्वास्तीरमासाद्य गच्छन्नेकः स कौशिकः । तयोः प्रीत्या स राजेन्द्र द्वे विद्ये प्रथमं ददौ ६९ बलामतिबलां चैव समन्त्रे च ससंग्रहे । क्षुत्पिपासापनयने पुनश्चैव महामतिः ७० अस्त्रग्राममशेषं तु शिक्षयित्वा तु तौ तदा । आश्रमाणि च दिव्यानि मुनीनां भावितात्मनाम् ७१ दर्शयित्वा उषित्वा च पुण्यस्थानेषु सत्तमः । गङ्गामुत्तीर्य शोणस्य तीरमासाद्य पश्चिमम् ७२ मुनिधार्मिकसिद्धांश्च पश्यन्तौ रामलक्ष्मणौ । ऋषिभ्यश्च वरान् प्राप्य तेन नीतौ नृपात्मजौ ७३ ताटकाया वनं घोरं मृत्योर्मुखमिवापरम् । गते तत्र नृपश्रेष्ठ विश्वामित्रो महातपाः ७४ राममक्लिष्टकर्माणमिदं वचनमब्रवीत् । राम राम महाबाहो ताटका नाम राक्षसी ७५ रावणस्य नियोगेन वसत्यस्मिन्महावने । तया मनुष्या बहवो मुनिपुत्रा मृगास्तथा ७६ निहता भक्षिताश्चैव तस्मात्त्वां वध सत्तम । इत्येवमुक्तो मुनिना रामस्तं मुनिमब्रवीत् ७७ कथं हि स्त्रीवधं कुर्यामहमद्य महामुने ।

---

१ 'ब्राह्मणं स नृपः पुनः' इति 'ग' पुस्तके पाठः । २ 'पुनरहन्ते रामलक्ष्मणौ' इति 'क ख' पुस्तकयोः । ३ 'सत्तम' इति 'ग' पुस्तके ।



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्त्रीवधे तु महापापं प्रवदन्ति मनीषिणः ७८ इति रामवचः श्रु-
त्वा विश्वामित्र उवाच तम् । यस्यास्तु निधनाद्राम जनाः सर्वे
निराकुलाः ७९ भवन्ति सततं तस्मात्तस्याः पुण्यप्रदो वधः ।
इत्येवं वादिनि मुनौ विश्वामित्रे निशाचरी ८० आगता सुम-
हाघोरा ताटका विवृतानना । मुनिना प्रेरितो रामस्तां दृष्ट्वा
विवृताननाम् ८१ उद्यतैकभुजयष्टिमायतीं श्रोणिलम्बिपुरुषान्त्र-
मेखलाम् । तां विलोक्य वनितावधे घृणां पत्रिणा सह मुमोच
राघवः ८२ शरं संधाय वेगेन तेन तस्या उरःस्थलम् । विपा-
टितं द्विधा राजन् सा पपात ममार च ८३ घातयित्वा तु तामेवं
तावानीय मुनिस्तुतौ । मापयामास तं तत्र नानाऋषिनिषेवित-
म् ८४ नानाद्रुमलताकीर्णं नानापुष्पोपशोभितम् ८५ नानानिर्झर-
तोयाढ्यं विन्ध्यशैलान्तरस्थितम् ८६ शाकमूलफलोपेतं दिव्यं
सिद्धाश्रमं स्वकम् । रक्षार्थं तावुभौ स्थाप्य शिक्षयित्वा विशेषतः
८७ ततश्चारब्धवान् यागं विश्वामित्रो महातपाः । दीक्षां प्रविष्टे
च मुनौ विश्वामित्रे महात्मनि ८८ यज्ञे तु विततं तत्र कर्म कु-
र्वन्ति ऋत्विजः । मारीचश्च सुबाहुश्च बहवश्चान्यराक्षसाः ८९
आगता यागनाशाय रावणेन नियोजिताः। तानागतान्स विज्ञाय
रामः कमललोचनः९०शरेण पातयामास सुबाहुं धरणीतले । अ-
सृक्प्रवाहं वर्षन्तं मारीचं भल्लकेन तु । प्रताड्य नीतवानब्धिं य-
था पर्णं तु वायुना । शेषांस्तु हतवान् रामो लक्ष्मणश्च निशाच-
रान् ९१ रामेण रक्षितमखो विश्वामित्रो महायशाः । समाप्य
यागं विधिवत् पूजयामास ऋत्विजान् ९२ सदस्यानपि सम्पू-
ज्य यथार्हं च ह्यरिंदम । रामं च लक्ष्मणं चैव पूजयामास भक्ति-
तः ९३ ततो देवगणस्तुष्टो यज्ञभागेन सत्तम । ववर्ष पुष्पवर्षं
तु रामदेवस्य मूर्धनि ९४ निवार्य राक्षसभयं कारयित्वा तु त-
न्मखम् । श्रुत्वा नानाकथाः पुण्या रामो भ्रातृसमन्वितः ९५

१ इदं पद्यं 'ग' पुस्तके न ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तेन नीतो विनीतात्मा अहल्या यत्र तिष्ठति । व्यभिचारान्महेन्द्रेण भर्त्रा शप्ता हि सा पुरा ९६ पाषाणभूता राजेन्द्र तस्य रामस्य दर्शनात् । अहल्या मुक्तशापा च जगाम गौतमं प्रति९७ विश्वामित्रस्ततस्तत्र चिन्तयामास वै क्षणम् । कृतदारो मया नेयो रामः कमललोचनः९८ इति सञ्चिन्त्य तौ गृह्य विश्वामित्रो महातपाः । शिष्यैः परिवृतोनेकैर्जगाम मिथिलां प्रति ९९ नानादेशादथायाता जनकस्य निवेशनम् । राजपुत्रा महावीर्याः पूर्वं सीताभिकाङ्क्षिणः १०० तान् दृष्ट्वा पूजयित्वा तु जनकश्च यथार्हतः । यत्सीतायाः समुत्पन्नं धनुर्माहेश्वरं महत् १ अर्चितं गन्धमालाभी रम्यशोभासमन्विते । रङ्गे महति विस्तीर्णे स्थापयामास तद्धनुः २ उवाच च नृपान् सर्वांस्तदोच्चैर्जनको नृपः । आकर्षणादिदं येन धनुर्भग्नं नृपात्मजाः ३ तस्येयं धर्मतो भार्या सीता सर्वाङ्गशोभना । इत्येवं श्राविते तेन जनकेन महात्मना ४ क्रमादादाय ते तत्तु सज्जीकर्तुमथाभवन् । धनुषा ताडिताः सर्वे क्रमात्तेन महीपते ५ विधूय पतिता राजन् विलज्जास्तत्र पार्थिवाः । तेषु भग्नेषु जनकस्तद्धनुस्त्र्यम्बकं नृप ६ संस्थाप्य स्थितवान्वीरो रामागमनकाङ्क्षया । विश्वामित्रस्ततः प्राप्तो मिथिलाधिपतेर्गृहम् ७ जनकोपि च तं दृष्ट्वा विश्वामित्रं गृहागतम् । रामलक्ष्मणसंयुक्तं शिष्यैश्चाभिगतं तदा ८ तं पूजयित्वा विधिवत् प्राज्ञं विप्रानुयायिनम् । रामं रघुपतिं चापि लावण्यादिगुणैर्युतम् ९ शीलाचारगुणोपेतं लक्ष्मणं च महामतिम् । पूजयित्वा यथान्यायं जनकः प्रीतमानसः ११० हेमपीठे सुखासीनं शिष्यैः पूर्वापरैर्वृतम् । विश्वामित्रमुवाचाथ किं कर्तव्यं मयेति सः ११

१ 'पित्रैवश्यमतो यास्ये जनकस्य निवेशनम् । स्वयंवरश्च सितायाः सुतायावर्ततेधुना ' इदं पद्यं ' ग ' पुस्तके पठितम् । २ ' विलक्षा ' इति ' कं ख' पुस्तके भाति । ३ ' तद्धनुर्भवनोत्तमम्' इति ' ग ' पुस्तके पाठः । ४ ' रामं रतिपतिंश्चापि लावण्याद्बुद्धिगुणैर्युतम् ' इति ' ग ' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ मार्कण्डेय उवाच ॥

इति श्रुत्वा वचस्तस्य मुनिः प्राह महीपतिम् । एष रामो महाराज विष्णुः साक्षान्महीपतिः ११२ रक्षार्थं विप्रपानां तु जातो दशरथात्मजः । अस्मै सीतां प्रयच्छ त्वं देवकन्यामिव स्थिताम् ११३ अस्या विवाहे राजेन्द्र धनुर्भङ्गमुदीरितम् । तदानय भवधनुर्चयस्व जनाधिप ११४ तथेत्युक्त्वा च राजा हि भवचापं तदद्भुतम् । अनेकभूभुजां भङ्गि स्थापयामास पूर्ववत् ११५ ततो दशरथसुतो विश्वामित्रेण चोदितः । तेषां मध्यात्समुत्थाय रामः कमललोचनः ११६ प्रणम्य विप्रा-न् देवांश्च धनुरादाय तत्तदा । सज्जं कृत्वा महाबाहुर्ज्याघोषमक-रोत्तदा ११७ आकृष्यमाणं तु बलात्तेन भग्नं महद्धनुः । सीता च मालामादाय शुभां रामस्य मूर्द्धनि ११८ क्षिप्त्वा संवरयामास स-र्वक्षत्रियसन्निधौ । ततस्ते क्षत्रियाः क्रुद्धा राममासाद्य सर्वतः ११९ मुमुचुः शरजालानि गर्जयन्तो महाबलाः । तान्निरीक्ष्य ततो रामो धनुरादाय वेगवान् १२० ज्याघोषतलघोषेण कम्पयामास तान् नृपान् । चिच्छेद शरजालानि तेषां स्वास्त्रै रथांस्ततः १२१ धनूंषि च पताकाश्च रामश्चिच्छेद लीलया । सन्नह्य स्वबलं सर्वं मिथिलाधिपतिस्ततः १२२ जामातरं रणे रक्षन् पार्ष्णिग्राहो ब-भूव ह । लक्ष्मणश्च महावीरो विद्राव्य युधि तान् नृपान् १२३ हस्त्यश्वान्जगृहे तेषां स्यन्दनानि बहूनि च । वाहनानि परित्य-ज्य पलायनपरान्नृपान् १२४ तान्निहन्तुं च धावन्तं पृष्ठतो ल-क्ष्मणस्तदा । मिथिलाधिपतिस्तं च वारयामास कौशिकः १२५ जितसेनं महावीरं रामं भ्रात्रा समन्वितम् । आदाय प्रविवेशाथ जनकः स्वगृहं शुभम् १२६ दूतं च प्रेषयामास तदा दशरथाय सः । श्रुत्वा दूतमुखात्सर्वं विदितार्थः स पार्थिवः १२७ सभार्यः ससुतः श्रीमान् हस्त्यश्वरथवाहनः । मिथिलामाजगामाशु स्वबले-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

न समन्वितः२८ जनकोप्यस्य सत्कारं[1] कृत्वा स्वां च सुतां ततः विधिवत्कृतशुल्कां[2] तां ददौ रामाय पार्थिव २९ अपराश्च सुतास्तिस्रो रूपवत्यः स्वलंकृताः। त्रिभ्यस्तु लक्ष्मणादिभ्यः स्वकन्या विधिवद्ददौ १३० एवं कृतविवाहोसौ रामः कमललोचनः। भ्रातृभिर्मातृभिः सार्धं पित्रा बलवता सह ३१ दिनानि कतिचित्तत्र स्थितो विविधभोजनैः। ततोयोध्यापुरीं गतुमुत्सुकं ससुतं नृपम् ३२ दृष्ट्वा दशरथं राजा सीतायाः प्रददौ वसु। रत्नानि दिव्यानि बहूनि दत्वा रामाय वस्त्राण्यतिशोभनानि। हस्त्यश्वदासानपिकर्मयोग्यान् दासीजनांश्च प्रवराः स्त्रियश्च ३३ सीतां सुशीलां बहुरत्नभूषितां रथं समारोप्य सुतां सुरूपाम्। वेदादिघोषैर्बहुमङ्गलैश्च संप्रेषयामास स पार्थिवो बली ३४ प्रेषयित्वा सुतां दिव्यां समर्प्य दाशरथेः सुतम्। विश्वामित्रं नमस्कृत्य जनकः सन्निवृत्तवान् ३५ तस्य पत्न्यो महाभागा शिक्षयित्वा सुतां तदा। भर्तृभक्तिं कुरु शुभे श्वश्रूणां श्वशुरस्य च ३६ श्वश्रूणामर्पयित्वा तां निवृत्ता विविशुः पुरम्। ततस्तु रामं गच्छन्तमयोध्यां प्रबलान्वितम् ३७ श्रुत्वा परशुरामो वै पन्थानं संरुरोध ह ३८ तं दृष्ट्वा राजपुरुषाः सर्वे ते दीनमानसाः। आसीद्दशरथश्चापि दुःखशोकपरिप्लुतः ३९ सभार्यः सपरीवारो भार्गवस्य भयान्नृप। ततोब्रवीज्जनान् सर्वान् राजानं च सुदुःखितम् १४० वसिष्ठश्चोर्जिततपा ब्रह्मचारी महामुनिः।

॥ वसिष्ठ उवाच ॥

युष्माभिरत्र रामार्थे न कार्यं दुःखमण्वपि ४१ पित्रा वा मातृभिर्वापि अन्यैर्भृत्यजनैरपि। अयं हि नृपते रामः साक्षाद्विष्णुस्तु ते गृहे ४२ जगतः पालनार्थाय जन्म प्राप्तो न संशयः। यस्य

[1] 'संस्कारं' इति 'ग' पुस्तके पाठः। [2] 'विधिवद्दत्तशुल्कां' इति 'ख' पुस्तके पाठः।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सङ्कीर्त्य नामापि भवभीतिः प्रणश्यति४३स्वयं मूर्त्तं ब्रह्म नृप भ-यादेस्तत्र का कथा । यत्र सङ्कीर्त्यते रामकथामात्रमपि प्रभो ४४ नोपसर्गभयं तत्र नाकालमरणं नृणाम् । इत्युक्ते भार्गवो रामो राममाहाग्रतः स्थितम् ४५ त्यज त्वं रामसंज्ञां तु मया वा सङ्गरं कुरु । इत्युक्ते राघवः प्राह भार्गवं तं पथि स्थितम् ४६ रामसंज्ञां कुतस्त्यक्षे त्वया योत्स्ये स्थिरो भव । इत्युक्त्वा तं पृथक् स्थित्वा रामो राजीवलोचनः ४७ ज्याघोषमकरोद्वीरो वीरस्यै-वाग्रतस्तदा । ततः परशुरामस्य देहान्निष्क्रम्य वैष्णवम् ४८ प-श्यतां सर्वभूतानां तेजो राममुखेविशत् । दृष्ट्वा तं भार्गवो रामः प्रसन्नवदनो ऽब्रवीत् ४९ राम राम महाबाहो रामस्त्वं नात्र सं-शयः । विष्णुरेव भवान् जातो ज्ञातोस्यद्य मया विभो १५० गच्छ वीर यथाकामं देवकार्यं च वै कुरु । दुष्टानां निधनं कृत्वा शिष्टांश्च परिपालय ५१ याहि त्वं स्वेच्छया राम अहं गच्छे तपोवनम् । इत्युक्त्वा पूजितस्तैस्तु मुनिभावेन भार्गवः५२महेन्द्राद्रिं जगामाथ तपसे धृतमानसः । ततस्तु जातहर्षास्ते जना दशरथश्च ह ५३ पुरीमयोध्यां सम्प्राप्य रामेण सह पार्थिवः । दिव्यशोभां पुरीं कृत्वा सर्वतो भद्रशालिनीम् ५४ प्रत्युत्थाय ततः पौराः शं-खतूर्यादिभिः स्वनैः।विशन्तं राममागत्य कृतदारं रणेऽर्जितम्५५ तं वीक्ष्य हर्षिताः सन्तो विविशुस्तेन वै पुरीम् । तौ दृष्ट्वा स मुनिः प्राप्तौ रामं लक्ष्मणमन्तिके ५६ दशरथाय तत्पित्रे मातृ-भ्यश्च विशेषतः । तौ समर्प्य मुनिश्रेष्ठस्तेन राज्ञा च पूजितः ५७ विश्वामित्रश्च सहसा प्रतिगन्तुं मनो दधे । समर्प्य रामं स मुनिः सहानुजं सभार्यमग्रे पितुरेकवल्लभम् ५८पुनः पुनः श्राव्य हस-

---

१ 'ब्रह्मरूपी-' इति 'ख' पुस्तके । २ 'प्रसन्नवदनोऽभवत् । रामं दाशरथिं राजंस्त्वया दत्तं निशामय' इति 'ग' पुस्तके । ३ 'तोरणै रुप शोभिताम्' इति 'ग' पुस्तके । ४ 'रणोर्जितम्' इति स्पष्टं 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

न्महामतिर्जगाम सिद्धाश्रममव्ययमात्मनः १८९ इति श्रीनरसिंहपुराणे रामप्रादुर्भावे सप्तचत्वारिंशोऽध्यायः ४७ ॥

---

# अष्टचत्वारिंशोऽध्यायः ।

॥ मार्कण्डेय उवाच ॥

कृतदारो महातेजा रामः कमललोचनः। पित्रे सुमहतीं प्रीतिं जनानामुपपादयन् १ अयोध्यायां स्थितो रामः सर्वभोगसमन्वितः । प्रीत्या नन्दत्ययोध्यायां रामे रघुपतौ नृप २ भ्राता शत्रुघ्नसहितो भरतो मातुलं ययौ । ततो दशरथो राजा प्रसमीक्ष्य सुशोभनम् ३ युवानं बलिनं योग्यं भूपसिद्ध्यै सुतं कविम्। अभिषिच्य राज्यभारं रामे संस्थाप्य वैष्णवम् ४ पदं प्राप्तुं महद्यत्नं करिष्यामीत्यचिन्तयत् । संचिन्त्य तत्परो राजा सर्वदिक्षु समादिशत् । प्राज्ञान् भृत्यान्महीपालान्मन्त्रिणश्च त्वरान्वितान्। रामाभिषेकद्रव्याणि ऋषिप्रोक्तानि यानि वै ५ तानि भृत्याः समाहृत्य शीघ्रमागन्तुमर्हथ । दूतामात्याः समादेशात् सर्वदिक्षु नराधिपान् ६ आहूय तान् समाहृत्य शीघ्रमागन्तुमर्हथ । अयोध्यापुरमत्यर्थं सर्वशोभासमन्वितम् ७ जनाः कुरुत सर्वत्र नृत्यगीतादिनन्दितम् । पुरवासिजनानन्दं देशवासिमनः प्रियम् ८ रामाभिषेकं विपुलं श्वो भविष्यति जानथ । श्रुत्वेत्थं मन्त्रिणः प्राहुस्तं नृपं प्रणिपत्य च ९ शोभनं ते मतं राजन् यदिदं परिभाषितम् । रामाभिषेकमस्माकं सर्वेषां च प्रियङ्करम् १० इत्युक्तो दशरथस्तैस्तान् सर्वान् पुनरब्रवीत् । आनीयतां द्रुतं सर्वे सम्भारा मम शासनात् ११ सर्वतः सारभूता च

---

१ 'भूपतिं वै सुतं बली' इति 'ग' पुस्तके पाठः । २ 'वै ध्रुवम्' इति 'ग' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पुरी चेयं समन्ततः । अद्यशोभान्विता कार्या कर्तव्यं यागमण्डलम् १२ इत्येवमुक्ता राज्ञा ते मन्त्रिणः शीघ्रकारिणः । तथैव चक्रुस्ते सर्वे पुनःपुनरुदीरिताः १३ प्राप्तहर्षः स राजा च शुभं दिनमुदीक्षयन् । कौशल्या लक्ष्मणश्चैव सुमित्रा नागरो जनः १४ रामाभिषेकमाकर्ण्य मुदं प्राप्यातिहर्षिताः। श्वश्रूश्वशुरयोः सम्यक् शुश्रूषणपरा तु सा १५ मुदान्विता स्थिता सीता भर्तुराकर्ण्य शोभनम् । श्वोभाविन्यभिषेके तु रामस्य विदितात्मनः १६ दासी तु मन्थरानाम्नी कैकय्याः कुब्जरूपिणी । स्वां स्वामिनीं तु कैकेयीमिदं वचनमब्रवीत् १७ शृणु राज्ञि महाभागे वचनं मम शोभनम् । त्वत्पतिस्तु महाराजस्तव नाशाय चोद्यतः १८ रामोसौ कोशलीपुत्रः श्वो भविष्यति भूपतिः । वसुवाहनकोशादि राज्यं च सकलं शुभे १९ भविष्यत्यद्य रामस्य भरतस्य न किञ्चन। भरतोपि गतो दूरं मातुलस्य गृहं प्रति २० हा कष्टं मन्दभाग्यासि सापत्न्याद्दुःखिता भृशम् । सैवमाकर्ण्य कैकेयी कुब्जामिदमथाब्रवीत् २१ पश्य मे दक्षतां कुब्जे अद्यैव त्वं विचक्षणे । यथा तु सकलं राज्यं भरतस्य भविष्यति २२ रामस्य वनवासश्च तथा यत्नं करोम्यहम् । इत्युक्त्वा मन्थरां सा तु उन्मुच्य स्वाङ्गभूषणम् २३ वस्त्रं पुष्पाणि चोन्मुच्य स्थूलवासोधराऽभवत् । निर्माल्यपुष्पधृक्कष्टा कश्मलाङ्गी विरूपिणी २४ भस्मधूल्यादिनिर्दग्धा भस्मधूल्या तथाश्रिते । भूभागे शान्तदीपे सा सन्ध्याकाले सुदुःखिता २५ ललाटे श्वेतचैलं तु बध्वा सुष्वाप भामिनी । मन्त्रिभिः सह कार्याणि संमन्त्र्य सकलानि तु २६ पुण्याहःस्वस्तिमाङ्गल्यैः स्थाप्य रामं तु मण्डले । ऋषिभिस्तु वसिष्ठाद्यैः

---

१ 'शीघ्रगामिनः' इति 'ग' पुस्तके । २ 'कुजरूपिणी' इति 'ग' पुस्तके । ३ 'वस्त्राणि पुष्पाणि चोन्मुच्य' इति 'ख ग' पुस्तकयोः । ४ 'संध्यामुपास्य स बहिः प्रविवेश सभां ततः' इति 'ग' पुस्तके । ५ 'मण्डपे' इति पाठो 'क' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सार्द्धं सम्भारमण्डपे २७ वृद्धिजागरणीयैश्च सर्वतस्तूर्यनादितं। गीतनृत्यसमाकीर्णे शंखकाहलनिःस्वनैः २८ स्वयं दशरथ- स्तत्र स्थित्वा प्रत्यागतः पुनः। कैकेय्या वेश्मनो द्वारं जर द्भिः परिरक्षितम् २९ रामाभिषेकं कैकेय्याः कथनाय च पा- र्थिवः। कैकेयीभवनं वीक्ष्य सान्धकारमथाब्रवीत् ३० अ- न्धकारमिदं कस्मादद्य ते मन्दिरे प्रिये। रामाभिषेकं हर्षा र अन्त्यजा अपि मेनिरे ३१ गृहालङ्करणं कुर्वन्त्यद्य लोका मनो- हरम्। त्वयाद्य न कृतं कस्मादित्युक्त्वा च महीपतिः ३२ ज्वालयित्वा गृहे दीपान् प्रविवेश गृहं नृपः। अशोभनाङ्गीं कै- केयीं स्वपन्तीं पतितां भुवि ३३ दृष्ट्वा दशरथः प्राह तस्याः प्रियमिदं त्विति। आश्लिष्योच्छ्राय्य तां राजा शृणु मे पर- मं वचः ३४ स्वमातुरधिकां नित्यं यस्ते भक्तिं करोति वै। तस्याभिषेकं रामस्य श्वो भविष्यति शोभने ३५ इत्युक्ते पा- र्थिवे तस्मिन् किंचिन्नोवाच सा शुभा। मुञ्चन्ती दीर्घमुष्णं च रोषाच्छ्वासं मुहुर्मुहुः ३६ तस्थावाश्लिष्य हस्ताभ्यां पार्थिवः प्राह रोषिताम्। किं ते कैकेयि दुःखस्य कारणं वद शोभने ३७ वस्त्राभरणरत्नादि यद्यदिच्छसि शोभने। तत्त्वं गृहीष्व निः शङ्कं भाण्डारात्सुखिनी भव ३८ भाण्डारेण[1] मम शुभे श्वोभिसि- द्धिर्भविष्यति। यदाभिषेकं सम्प्राप्ते रामे राजीवलोचने ३९ भाण्डागारस्य मे द्वारं मया मुक्तं निरर्गलम्। भविष्यति पु- नः पूर्णं रामे राज्यं प्रशासति ४० बहु मानय रामस्य अ- भिषेकं महात्मनः। इत्युक्ता राजवर्येण कैकेयी पापलक्षणा ४१ कुमतिर्निर्घृणा दुष्टा कुब्जया शिक्षिताब्रवीत्। राजानं स्वपतिं वाक्यं क्रूरमत्यन्तनिष्ठुरम् ४२ रत्नादि सकलं यत्ते त- न्ममैव न संशयः। देवासुरमहायुद्धे प्रीत्या यन्मे वरद्वयम् ४३

---

१ भाण्डागारेत्यादि भाण्डारेणेत्यादि च श्लोकद्वयं 'ग' पुस्तके न विद्यते।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पुरा दत्तं त्वया राजंस्तदिदानीं प्रयच्छ मे। इत्युक्तः पार्थिवः प्राह कैकेयीमशुभां तदा ४४ अदत्तमप्यहं दास्ये तव नान्यस्य वा शुभे । किं मे प्रतिश्रुतं पूर्वं दत्तमेव मया तव ४५ शुभाङ्गी भव कल्याणि त्यज कोपमनर्थकम् ।रामाभिषेकजं हर्षं भजोत्तिष्ठ सुखी भव ४६ इत्युक्ते राजनि पुनः कैकेयीकलहप्रिया । उवाच परुषं वाक्यं राज्ञो मरणकारणम् ४७ वरद्वयं पूर्वदत्तं यदि दास्यसि मे विभो । श्वोभूते गच्छतु वनं रामोऽयं कोशलात्मजः ४८ द्वादशाब्दं निवसतु त्वद्वाक्याद्दण्डके वने। अभिषेकं च राज्यं च भरतस्य भविष्यति ४९ इत्याकर्ण्य स कैकेय्या वचनं घोरमप्रियम्।पपात भुवि निःसंज्ञो राजा सापि विभूषिता ५० रात्रिशेषं नयित्वा तु प्रभाते सा मुदावती । दूतं सुमन्त्रमाहैवं राममानीयतामिति ५१ रामस्तु कृतपुण्याहः कृतस्वस्त्ययनो द्विजैः । यागमण्डपमध्यस्थः शंखतूर्यरवान्वितः ५२ तमासाद्य ततो दूतः प्रणिपत्य पुरःस्थितः । रामराम महाबाहो आज्ञापयति ते पिता ५३ द्रुतमुत्तिष्ठ गच्छ त्वं यत्र तिष्ठति ते पिता ।इत्युक्तस्तेन दूतेन शीघ्रमुत्थाय राघवः ५४ अनुज्ञाप्य द्विजान् प्राप्तः कैकेय्या भवनं प्रति । प्रविशन्तं गृहं रामं कैकेयी प्राह निर्घृणा ५५ पितुस्तव मतं वत्स इदं ते प्रब्रवीम्यहम् । वने वस महाबाहो गत्वा त्वं द्वादशाब्दकम् ५६ अद्यैव गम्यतां वीर तपसे धृतमानसः । न चिन्त्यमन्यथा वत्स आदरात् कुरु मे वचः ५७ एतच्छ्रुत्वा पितुर्वाक्यं रामः कमललोचनः । तथेत्याज्ञां गृहीत्वासौ नमस्कृत्य च तावुभौ ५८ निष्क्रम्य तद्गृहाद्रामो ह्यनुरादाय वेश्मतः । कौशल्यां च नमस्कृत्य सुमित्रां गन्तुमुद्यतः ५९ तच्छ्रुत्वा तु ततः पौरा दुःखशोकपरिप्लुताः । विव्यथुश्चाथ सौमित्रिः कैकेयीं प्रति रोषितः ६०ततस्तं राघवो दृष्ट्वा लक्ष्मणं रक्तलोचनम्।वारयामास धर्मज्ञो धर्मवाग्भिर्महामतिः६१

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ततस्तु तत्र ये वृद्धास्तान् प्रणम्य मुनींश्च सः । रामो रथं खिन्नसूतं प्रस्थानायारुरोह वै ६२ आत्मीयं सकलं द्रव्यं ब्राह्मणेभ्यो नृपात्मजः । श्रद्धया परया दत्वा वस्त्राणि विविधानि च ६३ तिस्रः स्वश्रूः समामन्त्र्य श्वशुरं च विसंक्रिकम् । मुञ्चन्तमश्रुधाराणि नेत्रयोः शोकजानि च ६४ पश्यती सर्वतः सीता चारुरोह तथा रथम् । रथमारुह्य गच्छन्तं सीतया सह राघवम् ६५ दृष्ट्वा सुमित्रा वचनं लक्ष्मणं चाह दुःखिता । रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् ६६ अयोध्यामटवीं विद्धि व्रज ताभ्यां गुणाकर । मात्रैवमुक्तो धर्मात्मा स्तनक्षीरार्द्रदेहया ६७ तां नत्वा चारुयानं तमारुरोह स लक्ष्मणः । गच्छतो लक्ष्मणो भ्राता सीता चैव पतिव्रता ६८ रामस्य पृष्ठतो जाता पुराद्विरो महामते । विधिछिन्नाभिषेकं तं रामं राजीवलोचनम् ६९ अयोध्यायां विनिष्क्रान्तमनुयाताः पुरोहिताः । मन्त्रिणः पौरमुख्याश्च दुःखेन महतान्विताः ७० आदेशं प्राप्य गच्छन्तं राममूचुरिदं वचः । रामराम महाबाहो गन्तुं नार्हसि शोभन ७१ राजन्नत्र निवर्तस्व विहायास्मान् क गच्छसि । इत्युक्तो राघवस्तैस्तु तानुवाच दृढव्रतः ७२ गच्छध्वं मन्त्रिणः पौरा गच्छध्वं च पुरोधसः । पित्रादेशं मया कार्यमभियास्यामि वै वनम् ७३ द्वादशाब्दं व्रतं चैतन्नीत्वाहं दण्डके वने । आगच्छामि पितुः पादं मातॄणां द्रष्टुमोजसा ७४ इत्युक्त्वा तान् जगामाथ रामः सत्यपरायणः । तं गच्छन्तं पुनर्याताः पृष्ठतो दुःखिता जनाः ७५ पुनः प्राह स काकुत्स्थो गच्छध्वं नगरीमिमाम् । मा-

---

१ 'ततो रथम्' इति 'ग' पुस्तके पाठः । २ 'अभ्युद्ययौ वने श्रीमान्त्सर्वभोगविवर्जितः । पितुराकर्ण्य वचनं प्रवेष्टुं वनमुद्यतः' इत्यधिकं पद्यं 'ग' पुस्तके द्विषष्टितमाग्रे । ३ 'नूनं पदं च कन्धां । यत्नादश्रूणि नेत्रयोः' इति 'ग' पुस्तके । ४ 'तं च संप्राप्य गच्छन्तम्' इति 'ख' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तृश्च पितरं चैव शत्रुघ्नं नगरीमिमाम् ७६ प्रजाः समस्तास्तत्रस्था राज्यं भरतमेव च । पालयध्वं महाभागास्तपसे याम्यहं वनम् ७७ अथ लक्ष्मणमाहेदं वचनं राघवस्तदा । सीतामर्पय राजानं जनकं मिथिलेश्वरम् ७८ पितृमातृवशे तिष्ठ गच्छ लक्ष्मण याम्यहम् । इत्युक्तः प्राह धर्मात्मा लक्ष्मणो भ्रातृवत्सलः७९ मैवमाज्ञापय विभो मामद्य करुणाकर । गन्तुमिच्छसि यत्र त्वमवश्यं तत्र याम्यहम् ८०इत्युक्ते[1] लक्ष्मणे तत्र सीतां तामाह राघवः । सीते गच्छ ममादेशात्पितरं प्रति शोभनम् । सुमित्रायाः गृहे चापि कौशल्यायाः सुमध्यमे । निवर्तस्व हि तावत्त्वं यावदागमनं मम । इत्युक्ते राघवे तत्र सीता प्राह कृतांजलिः । यत्र गत्वा वने वासं त्वं करोषि महाभुज ८१ तत्र गत्वा त्वया सार्द्धं वसाम्यहमरिंदम । वियोगं नो सहे राजंस्त्वया सत्यवता क्वचित्८२अतस्त्वां प्रार्थयिष्यामि दयां कुरु मम प्रभो । गन्तुमिच्छामि यत्र त्वमवश्यं तत्र याम्यहम् । नानायानैरुपगतान् जनान् वीक्ष्य स पृष्ठतः ८३ योषितां च गणान् रामो वारयामास धर्मवित् । निर्वर्त्य स्थीयतां स्वैरमयोध्यायां जनाः स्त्रियः ८४ गत्वाहं दण्डकारण्यं तपसे धृतमानसः । कतिपयाब्दादायास्ये नान्यथासत्यमीरितम् ८५ लक्ष्मणेन सह भ्रात्रा वैदेह्या च स्वभार्यया । जनान्निवर्त्य रामोसौ जगाम च गुहाश्रमम् ८६ गुहस्तु रामभक्तोसौ स्वभावादेव वैष्णवः । कृतांजलिपुटो भूत्वा किं कर्तव्यमिति स्थितः ८७ महतातपसाऽऽनीता गुरुणा याहि वः पुरा । भगीरथेन या भूमिं सर्वपापहरा शुभा ८८ नानामुनिजनैर्जुष्टा कूर्ममत्स्यसमाकुला । गङ्गा तुङ्गोर्मिमालाढ्या स्फटिकाभजलावहा ८९ गुहोपनीतनावा तु तां गङ्गां स महा-

[1] इतः पद्यद्वयं 'क ख' पुस्तकयोर्न । २ इदमर्धं 'ग' पुस्तके एव ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

द्युतिः । उत्तीर्य भगवान् रामो भरद्वाजाश्रमं शुभम् ९० प्रयागे तु ततस्तस्मिन् स्नात्वा तीर्थे यथाविधि । लक्ष्मणेन सह भ्रात्रा राघवः सीतया सह ९१ भारद्वाजाश्रमे तत्र विश्रान्तस्तेन पूजितः । ततः प्रभाते विमले तमनुज्ञाप्य राघवः ९२ भरद्वाजोक्तमार्गेण चित्रकूटं शनैर्ययौ । नानाद्रुमलताकीर्णं पुण्यतीर्थमनुत्तमम् ९३ तापसं वेषमास्थाय जन्हुकन्यामतीत्य वै । गते रामे सभार्ये तु सभ्रातरि स सारथिः । ९४ अयोध्यामवसन् भूप नष्टशोभां सुदुःखिताम् । नष्टसंज्ञो दशरथः श्रुत्वा वचनमप्रियम् ९५ रामप्रवासजननं कैकेय्या मुखनिःसृतम् । लब्धसंज्ञः क्षणाद्राजा रामरामेति चुक्रुशे ९६ कैकेय्युवाच भूपालं भरतं चाभिषेचय । सीतालक्ष्मणसंयुक्तो रामचन्द्रो वनं गतः ९७ पुत्रशोकाभिसंतप्तो राजा दशरथस्तदा । विहाय देहं दुःखेन देवलोकं गतस्तदा ९८ ततस्तस्य महापुर्य्यामयोध्यायामरिन्दम । रुरुदुर्दुःखशोकार्त्ता जनाः सर्वे च योषितः ९९ कौशल्या च सुमित्रा च कैकेयी कष्टकारिणी । परिवार्य मृतं तत्र रुरुदुस्ताः पतिं ततः १०० ततः पुरोहितस्तत्र वसिष्ठः सर्वधर्मवित् । तैलद्रोण्यां विनिक्षिप्य मृतं राजकलेवरम् १०१ दूतं वै प्रेषयामास सहमन्त्रिमणैः स्थितः । स गत्वा यत्र भरतः शत्रुघ्नेन सह स्थितः१०२ तत्र प्राप्य यथावृत्तं सनिवृत्तं महीपतिम् । तावानीय ततः शीघ्रं अयोध्यां पुनरागतः ३ क्रूराणि दृष्ट्वा भरतो निमित्तानि च वै पथि । विपरीतं त्वयोध्यायामिति मेने स पार्थिवः १०४ निःशोभां निर्गतश्रीकां दुःखशोकान्वितां पुरीम् । कैकेय्यग्निविनिर्दग्धामयोध्यां प्रविवेश सः १०५ दुःखान्विता जनाः सर्वे तौ दृष्ट्वा रुरुदुर्भृशम् । हा तात राम हा सीते लक्ष्मणेति पुनः-

१ 'नष्टसंज्ञ' इत्यतः 'रामचन्द्रो वनं गत' इत्यन्तं 'ग' पुस्तके न ।
२ 'कष्टदायिनी' इति 'ग' पुस्तके ।



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पुनः १०६ रुरोद भरतस्तत्र शत्रुघ्नश्च सुदुःखितः। कैकेय्या स्तत्क्षणाच्छ्रुत्वा चुक्रोध भरतस्तदा १०७ दुष्टा त्वं दुष्टचित्ता त्व यया रामः प्रवासितः। लक्ष्मणेन सह भ्रात्रा राघवः सीतया वनम् १०८ साहसं किं कृतं दुष्टे त्वया सद्योऽल्पभाग्यया। उद्वास्य सीतया रामं लक्ष्मणेन महात्मना १०९ 'ममैवं पुत्रं राजानं करोत्विति मतिस्तव'। दुष्टाया नष्टभाग्यायाः 'पुत्रोऽहं भाग्यवर्जितः। भ्राता रामेण रहितो नाहं राज्यं करोमि वै ११० यत्र रामो नरव्याघ्रः पद्मपत्रायतेक्षणः। धर्मज्ञः सर्वशास्त्रज्ञो मतिमान् बन्धुवत्सलः १११ सीता च यत्र वैदेही नियमव्रतचारिणी। पतिव्रता महाभागा सर्वलक्षणसंयुता ११२ लक्ष्मणश्च महावीर्यो गुणवान् भ्रातृवत्सलः। तत्र यास्यामि कैकेयि महत्पापं त्वया कृतम् ११३ राम एव मम भ्राता ज्येष्ठो मतिमतां वरः। स एव राजा दुष्टात्मे भृत्योऽहं तस्य वै सदा ११४ इत्युक्त्वा मातरं तत्र रुरोद भृशदुःखितः। हा राजन् पृथिवीपाल मां विहाय सुदुःखितम् ११५ क्व गतोऽस्यद्य वै तात किं करोमीह तद्वद। भ्राता पित्रा समः क्वास्ते ज्येष्ठो मे करुणाकरः ११६ सीता च मातृतुल्या मे क्व गतो लक्ष्मणश्च ह। इत्येवं विलपन्तं तं भरतं मन्त्रिभिः सह ११७ वसिष्ठो भगवानाह कालकर्मविभागवित्। उत्तिष्ठोत्तिष्ठ वत्स त्वं न शोकं कर्तुमर्हसि ११८ कर्मकालवशादेव पिता ते स्वर्गमास्थितः। तस्य संस्कारकार्याणि कर्माणि कुरु शोभन ११९ रामोपि दुष्टनाशाय शिष्टानां पालनाय च। अवतीर्णो जगत्स्वामी स्वांशेन भुवि माधवः १२० प्रायस्तत्रास्ति रामेण कर्तव्यं लक्ष्मणेन च। यत्रासौ भगवान् वीरः कर्मणा तेन चोदितः १२१ तत्कृत्वा

---

१ इदमर्धं 'ग' पुस्तके एव। २ 'चाल्पभाग्यया' इति 'ग' पुस्तके। ३ नेमौ द्वौ पादौ 'ग' पुस्तके। ४ 'पितृभ्यामपि मे हिता' इति 'ग' पुस्तके पाठः।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पुनरायाति रामः कमललोचनः। इत्युक्तो भरतस्तेन वसिष्ठेन महात्मना १२२ संस्कारं लम्भयामास विधिदृष्टेन कर्मणा। अग्निहोत्राग्निना दग्ध्वा पितुर्देहं विधानतः २३ स्नात्वा सरय्वाः सलिले कृत्वा तस्योदकक्रियाम्। शत्रुघ्नेन सह श्रीमान् मातृभिर्बान्धवैः सह। तस्यौर्ध्वदेहिकं कृत्वा मन्त्रिणामन्त्रिनायकैः। हस्त्यश्वरथपत्तीभिः सह मायान्महामतिः २४ भरतो रामन्वेष्टुं राममार्गेण सत्तमः। तमायान्तं महासेनं रामस्यानुविरोधिनम् १२५ मत्वा तं भरतं शत्रुं रामभक्तो गुहस्तदा। 'स्वं सैन्यं वर्तुलं कृत्वा सन्नद्धः कवची रथी'। महाबलपरीवारो रुरोध भरतं पथि २६ सभ्रातृकं सभार्यं मे रामं स्वामिनमुत्तमम्। प्रापितोसि वनं दुष्ट साम्प्रतं हन्तुमिच्छसि २७ गमिष्यसि दुरात्मंस्त्वं सेनया सह दुर्मते। इत्युक्तो भरतस्तत्र गुहेन नृपनन्दनः २८ तमुवाच विनीतात्मा रामायाथ कृताञ्जलिः। यथा त्वं रामभक्तोसि तथाहमपि भक्तिमान् २९ प्रोषिते मयि कैकेय्या कृतमेतन्महामते। रामस्यानयनार्थाय व्रजाम्यद्य महामते १३० सत्यपूर्वं गमिष्यामि पन्थानं देहि मे गुह। इति विश्वासमानीय जान्हवीं तेन तारितः ३१ नौकावृन्दैरनेकैस्तु स्नात्वासौ जान्हवीजले। भरद्वाजाश्रमं प्राप्तो भरतस्तं महामुनिम् ३२ प्रणम्य शिरसा तस्मै यथावृत्तमुवाचह। भरद्वाजोपि तं प्राह कालेन कृतमीदृशम् ३३ दुःखं न तावत् कर्तव्यं रामार्थेपि त्वयाधुना। वर्तते चित्रकूटेसौ रामः सत्यपराक्रमः ३४ त्वयि तत्र गते वापि प्रायोसौ नागमिष्यति। तथापि तत्र गच्छ त्वं यदसौ वक्ति तत्कुरु १३५ रामस्तु सीतया सार्धं वनखण्डे स्थितः शुभे। लक्ष्मणस्तु महावीर्यो दुष्टालोकनतत्परः ३६ इत्युक्तो भरतस्तत्र भरद्वाजेन धीमता। उत्तीर्य यमुनां यातश्चि-

१ 'मन्त्रिनायकैः' इति 'ग' पुस्तके। २ स्वचिन्हितार्धं 'क' पुस्तके न

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

त्रकूटं महानगम् ३७ स्थितौ सौ दृष्टवान् दूरात् सधूलीं चोत्त-
रां दिशम् । रामाय कथयित्वास तदादेशात्तु लक्ष्मणः ३८
वृक्षमारुह्य मेधावी वीक्षमाणः प्रयत्नतः । स ततो दृष्टवान्
हृष्टामायान्तीं महतीं चमूम् ३९ हस्त्यश्वरथसंयुक्तां दृष्ट्वा
राममथाब्रवीत् । हे भ्रातस्त्वं महाबाहो सीतापार्श्वे स्थिरो भव
१४० भूपोस्ति बलवान् कश्चित् हस्त्यश्वरथपत्तिभिः ।
इत्याकर्ण्य वचस्तस्य लक्ष्मणस्य महात्मनः ४१ रामस्तम-
ब्रवीद्वीरो वीरं सत्यपराक्रमः । प्रायेण भरतोस्माकं द्रष्टुमायाति
लक्ष्मण ४२ इत्येवं वदतस्तस्य रामस्य विदितात्मनः ।
आरात्संस्थाप्य सेनां तां भरतो विनयान्वितः ४३
ब्राह्मणैर्मन्त्रिभिः सार्द्धं रुदन्नागत्य पादयोः । रामस्य निपपाताथ
वैदेह्या लक्ष्मणस्य च ४४ मन्त्रिणो मातृवर्गश्च स्निग्धबन्धु-
सुहृज्जनाः । परिवार्य ततो रामं रुरुदुः शोककातराः १४५
स्वर्यातं पितरं ज्ञात्वा ततो रामो महामतिः। लक्ष्मणेन सह भ्रात्रा
वैदेह्याथ समन्वितः ४६ स्नात्वा मलापहे तीर्थे दत्त्वा च
सलिलांजलिम् । मात्रादीनभिवाद्याथ रामो दुःखसमन्वितः ४७
उवाच भरतं राजन् दुःखेन महतान्वितम् । अयोध्यां गच्छ भ-
रत इतः शीघ्रं महामते ४८ राज्ञा विहीनां नगरीं अनाथां
परिपालय ४९ इत्युक्तो भरतः प्राह रामं राजीवलोचनम् ।
त्वामृते पुरुषव्याघ्र न यास्येहमितो ध्रुवम् ५० यत्र त्वं तत्र यास्या
मि वैदेही लक्ष्मणो यथा ५१ इत्याकर्ण्य पुनः प्राह भरतं पुरतः
स्थितम् । नृणां पितृसमो ज्येष्ठः स्वधर्ममनुवर्तिनाम् ५२ यथा
न लङ्घ्यं वचनं मया पितृमुखेरितम् । तथा त्वया न लङ्घ्यं
स्याद्वचनं मम सत्तम ५३ मत्समीपादितो गत्वा प्रजास्त्वं परि-
पालय ५४ द्वादशाब्दिकमेतन्मे व्रतं पितृमुखेरितम् । तदरण्ये

---

१ 'आयाति बलवान्' इति 'ग' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

चरित्वा तु आगमिष्यामि तेन्तिकम् ५५ गच्छ तिष्ठ ममादेशे न दुःखं कर्तुमर्हसि । इत्युक्तो भरतः प्राह बाष्पपर्याकुलेक्षणः ५६ यथा पिता तथा त्वं मे नात्र कार्या विचारणा । तवादेशान्मया कार्यं देहि त्वं पादुके मम ५७ नन्दिग्रामे वसिष्येहं पादुके द्वादशाब्दिकम् । त्वद्वेषमेव मद्वेषं त्वद्व्रतं मे महाव्रतम् ५८ त्वं द्वादशाब्दिकादूर्ध्वं यदि नायासि सत्तम । ततो हविर्यथा चाग्नौ प्रधक्ष्यामि कलेवरम् ५९ इत्येवं शपथं कृत्वा भरतो हि सुदुःखितः । बहुप्रदक्षिणं कृत्वा नमस्कृत्य च राघवम् १६० पादुके शिरसा स्थाप्य भरतः प्रस्थितः शनैः । स कुर्वन् भ्रातुरादेशं नन्दिग्रामे स्थितो वशी । तपस्वी नियताहारः शाकमूलफलाशनः ६१ जटाकलापं शिरसा च बिभ्रत्त्वचश्च वार्क्षीः किल वन्यभोजी । रामस्य वाक्यादरतो हृदि स्थितं बभार भूभारमनिन्दितात्मा ६२ ॥ इति श्रीनरसिंहपुराणे श्रीरामप्रादुर्भावे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

## एकोनचत्वारिंशोऽध्यायः ।

॥ मार्कण्डेय उवाच ॥

गतेथ भरते तस्मिन् रामः कमललोचनः लक्ष्मणेन सह भ्रात्रा भार्यया सीतया सह १ शाकमूलफलाहारो विचचार महावने । कदाचिल्लक्ष्मणमृते रामदेवः प्रतापवान् २ चित्रकूटवनोद्देशे वैदेह्युत्संगमाश्रितः । सुष्वाप स मुहूर्तं तु ततः काको दुरात्मवान् ३ सीताभिमुखमभ्येत्य विददार स्तनान्तरम् । विदार्य वृक्षमारुह्य स्थितोसौ वायसाधमः ४ ततः प्रबुद्धो रामोसौ दृष्ट्वा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रक्तं स्तनान्तरे। शोकाक्लिष्टां तु सीतां तामुवाचकमलेक्षणः ५ इदं स्तनान्तरं भद्रे तव रक्तस्य कारणम्। इत्युक्ता सा च तं प्राह भर्तारं विनयान्विता ६ पश्य राजेन्द्र वृक्षाग्रे वायसं दुष्टचेष्टितम्। अनेनैव कृतं कर्म सुप्ते त्वयि महामते ७ रामोपि दृष्टवान् काकं तस्मिन् क्रोधमथाकरोत् । इषीकास्त्रं समाभाष्य ब्रह्मास्त्रेणाभिमन्त्रितम् ८ काकमुद्दिश्य चिक्षेप सोभ्यधावद्भयान्वितः। स त्विन्द्रस्य सुतो राजन्निन्द्रलोकं विवेशह ९ रामास्त्रं प्रज्वलद्दीप्तं तस्यानुप्रविवेश वै। विदितार्थश्च देवेन्द्रो देवैः सह समन्वितः १० निष्क्रामयच्च तं दुष्टं राघवस्यापकारिणम् । ततोसौ सर्वदेवैस्तु देवलोकाद्बहिः कृतः ११ पुनः सोभ्यपतद्रामं राजानं शरणं गतः। त्राहि राम महाबाहो अज्ञानादपकारिणम् १२ इति ब्रुवन्तं तं प्राह रामः कमललोचनः। अमोघं च ममैवास्त्रमङ्गमेकं प्रयच्छ वै १३ ततो जीवसि दुष्ट त्वं अपकारो महान्कृतः। इत्युक्तोसौ स्वकं नेत्रमेकमस्त्राय दत्तवान् १४ अस्त्रं तन्नेत्रमेकं तु भस्मीकृत्य समाययौ। ततः प्रभृति काकानां सर्वेषामेकनेत्रता १५ चक्षुषैकेन पश्यन्ति हेतुना तेन पार्थिव। उषित्वा तत्र सुचिरं चित्रकूटे स राघवः १६ जगाम दण्डकारण्यं नानामुनिनिषेवितम्। सभ्रातृकः सभार्यश्च तापसं वेषमास्थितः १७ धनुःपर्वसुपाणिश्च सेषुधिश्च महाबलः। ततो ददर्श तत्रस्थानम्बुभक्षान्महामुनीन् १८ अश्मकुट्टाननेकांश्च दन्तोलूखलिनस्तथा । चतुर्थकालिकानन्यान् एवमुग्रतपश्चरान् १९ तान् दृष्ट्वा प्रणिपत्योच्चै रामस्तैश्चाभिनन्दितः। ततोखिलं वनं दृष्ट्वा रामः साक्षाज्जनार्दनः २० भ्रातृभार्यासहायश्च सम्प्रतस्थे

---

१ ‘वद स्तनान्तरम’ इति ‘ग’ पुस्तके।

१ ‘अमोघाय ममास्त्राय’ इति ‘ग’ पुस्तके पाठः। २ ‘धनुःप्रवरपाणिश्च’ ‘ग’ पुस्तके। ३ ‘तथाष्टमकृतव्रतान्’ इति ‘ग’ पुस्तके पाठः। ४ पंचाग्निमध्यगानन्यानन्यानुग्रतपश्चरान्। इति ‘ग’ पुस्तके।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

महामतिः । दर्शयित्वा तु सीतायै वनं कुसुमितं शुभम् २१ नानाश्चर्यसमायुक्तं शनैर्गच्छन्स दृष्टवान् । कृष्णाङ्गं रक्तनेत्रं तु शैलस्थूलसमानकम् २२ शुभ्रदंष्ट्रं महाबाहुं संध्याघनशिरोरुहम् । मेघस्वनं सापराधं शरं संधाय राघवः २३ विराध राक्षसं क्रोधाल्लक्ष्मणेन सह प्रभुः । अन्यैरवध्यं हत्वा तं गिरिगर्ते महातनुम् २४ शिलाभिश्छाद्य गतवान् शरभङ्गाश्रमं ततः । तं नत्वा तत्र विश्रम्य तत्कथातुष्टमानसः २५ दत्वा तप्तोदकं तस्मै भ्रूणहा मुच्यते यतः२६ तीक्ष्णाश्रममुपागम्य दृष्टवांस्तं महामुनिम् । तेनादिष्टेन मार्गेण गत्वागस्तिं ददर्श ह २७ खड्गं तु विमलं तस्मादवाप रघुनन्दनः । इषुधिं चाक्षयशरं चापं चैव तु वैष्णवम् २८ ततोगस्त्याश्रमाद्रामो भ्रातृभार्यासमन्वितः । गोदावर्याः समीपे तु पञ्चवट्यामुवास सः २९ ततो जटायुरभ्येत्य रामं कमललोचनम् । नत्वा स्वकुलमाख्याय स्थितवान् गृध्रनायकः ३० रामोपि तत्र तं दृष्ट्वा आत्मवृत्तं विशेषतः । कथयित्वा तु तं प्राह सीतां रक्ष महामते ३१[1] इत्युक्तोसौ जटायुस्तु राममालिङ्ग्य सादरम् ॥ कार्यार्थं तु गते रामे भ्रात्रा सह वनान्तरम् ३२ अहं रक्ष्यामि ते भार्यां स्थीयतामत्र शोभन । इत्युक्त्वा गतवान्रामं गृध्रराजः स्वमाश्रमम् ३३ समीपे दक्षिणे भागे नानापक्षिनिषेविते । वसन्तं राघवं तत्र सीतया सह सुन्दरम् ३४ मन्मथाकारसदृशं कथयन्तं महाकथाः । कृत्वा मायामयं रूपं लावण्यगुणसंयुतम् ३५ मदनाक्रान्तहृदया कदाचिद्रावणानुजा । गायन्ती सुस्वरं गीतं शनैरागत्य राक्षसी ३६ ददर्श राममासीनं कानने सीतया सह । अथ शूर्पणखा घोरा मायारूपधरा शुभा ३७ निःशङ्का दुष्टचित्ता सा राघवं

---

१ अयं श्लोको 'ख ग' पुस्तके न । २ 'स्वकुलमाख्याय' इति 'ग' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

प्रत्यभाषत । भज मां कान्त कल्याणीं भजन्तीं कामिनीमिह ३८ भजमानां त्यजेद्यस्तु तस्य दोषो महान् भवेत् । इत्युक्तः शूर्पणखया रामस्तामाह पार्थिवः ३९ कलत्रवानहं बाले कनीयांसं भजस्व मे । "ममास्ति भार्या सदने त्वया नास्ति प्रयोजनम् । इति श्रुत्वा ततः प्राह राक्षसी कामरूपिणी । अतीव निपुणा चाहं रतिकर्मणि राघव ॥ त्यक्त्वैनामनभिज्ञां त्वं सीतां मां भज शोभनाम् । इत्याकर्ण्य वचः प्राह रामस्तां धर्मतत्परः । परस्त्रियं न गच्छेहं त्वमितो गच्छ लक्ष्मणम् । तस्य नात्र वने भार्या त्वामसौ संग्रहीष्यति । इत्युक्ता सा पुनः प्राह रामं राजीवलोचनम् " । यथा स्याल्लक्ष्मणो भर्ता तथा त्वं देहि पत्रकम् । तथैवमुक्त्वा मतिमान् रामः कमललोचनः ४० छिन्ध्यस्या नासिकमिति 'मोक्तव्या नात्र संशयः । इति रामो महाराजो ' लिख्य पत्रं प्रदत्तवान् ४१ सा गृहीत्वा तु तत्पत्रं गत्वा तस्मान्मुदान्विता । गत्वा ददावती तद्वत लक्ष्मणाय महात्मने ४२ तां दृष्ट्वा लक्ष्मणः प्राह राक्षसीं कामरूपिणीम् । न लङ्घ्यं राघववचो मया तिष्ठात्मकश्मले ४३ तां प्रगृह्य ततः खड्गमुद्यम्य विमलं सुधीः । तेन तत्कर्णनासां तु चिच्छेद तिलकाण्डवत् ४४ छिन्ननासा ततः सा तु रुरोद भृशदुःखिता । हा दशास्य मम भ्रातः सर्वदेवविमर्दक ४५ हा कष्टं कुम्भकर्णाद्य याता मे चापदा परा । हा हा कष्टं गुणनिधे विभीषण महामते ४६ इत्येवमार्ता रुदती सा गत्वा खरदूषणौ । त्रिशिरसं च सा दृष्ट्वा निवेद्यात्मपराभवम् ४७ राममाह जनस्थाने भ्रात्रा सह महाबलम् । ज्ञात्वा ते राघवं क्रुद्धाः प्रेषयामासुरूर्जितान् ४८ चतुर्दशसहस्राणि राक्षसानां बलीयसाम् । अग्रेनिजग्मुस्तेनैव राक्षसां

१ 'ममास्ती' त्यादि "राजीव लोचन" मित्यन्तं 'ग' पुस्तके एव । २ द्वाविमौ पादौ नैव 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नायकाव्ययः ४९ रावणेन नियुक्तास्ते पुरैव तु महाबलाः । "महाबलपरीवारा जनस्थानमुपागताः । क्रोधेन महताविष्टा दृष्ट्वा तां छिन्ननासिकाम्' । रुदतीमश्रुदिग्धाङ्गीं भगिनीं रावणस्य तु ५० रामोपि तद्बलं दृष्ट्वा राक्षसानां बलीयसाम् । संस्थाप्य लक्ष्मणं तत्र सीताया रक्षणं प्रति ५१ गत्वा तु महितैस्तत्र राक्षसैर्बलदर्पितैः । चतुर्दशसहस्रं तु राक्षसानां महाबलम् ५२ क्षणेन निहतं तेन शरैरग्निशिखोपमैः । खरश्च निहतस्तेन दूषणश्च महाबलः ५३ त्रिशिराश्च महारोषाद्रणे रामेण पातितः । हत्वा तान् राक्षसान् दुष्टान् रामश्चाश्रममाविशत् ५४ शूर्पणखा च रुदती रावणान्तिकमागता । छिन्ननासां च तां दृष्ट्वा रावणो भगिनीं तदा ५५ मारीचं प्राह दुर्बुद्धिः सीताहरणकर्मणि । पुष्पकेण विमानेन गत्वाहं त्वं च मातुल ५६ जनस्थानसमीपे तु स्थित्वा तत्र ममाज्ञया । सौवर्णमृगरूपं त्वमास्थाय तु शनैः शनैः ५७ गच्छ त्वं तत्र कार्यार्थं यत्र सीता व्यवस्थिता । दृष्ट्वा सा मृगपोतं त्वां सौवर्णं त्वयि मातुल ५८ स्पृहां करिष्यते रामं प्रेषयिष्यति बन्धने । तद्वाक्यात्तत्र गच्छन्तं धावस्व गहने वने ५९ लक्ष्मणस्यापकर्षार्थं वक्तव्यं वागुदीरणम् । ततः पुष्पकमारुह्य मायारूपेण चाप्यहम् ६० तां सीतामानयिष्यामि तस्यामासक्तमानसः । त्वमपि स्वेच्छया पश्चादागमिष्यसि शोभनः ६१ इत्युक्ते रावणेनाथ मारीचो वाक्यमब्रवीत् । त्वमेव गच्छ पापिष्ठ नाहं गच्छामि तत्र वै ६२ पुरैवानेन रामेण व्यथितोहं मुनेर्मखे । एवमुक्तेथ मारीचौ रावणः क्रोधमूर्च्छितः ६३ मारीचं हन्तुमारेभे मारीचोप्याह रावणम् । तव हस्तवधाद्वीर रामेण मरणं वरम् ६४ अहं गमिष्यामि तत्र यत्र त्वं नेतुमिच्छसि । अथ पुष्पकमारुह्य जनस्थानमुपागतः ६५ मारीचस्तत्र सौवर्णं मृग-

१ 'महाबले' ति पद्यं 'म' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मास्थाय चाग्रतः । जगाम यत्र सा सीता वर्तते जनकात्मजा ६६ सौवर्णं मृगपोतं तु दृष्ट्वा सीता यशस्विनी । भाविकर्मवशाद्रामसुवाच पतिमात्मनः ६७ गृहीत्वा देहि सौवर्णं मृगपोतं नृपात्मज । अयोध्यायां तु मद्गेहे क्रीडनार्थमिदं मम ६८ तथैवमुक्तो रामस्तु लक्ष्मणं स्थाप्य तत्र वै । रक्षणार्थं तु सीताया गतोसौ मृगपृष्ठतः ६९ रामेण चानुयातोसौ अभ्यधावद्वने मृगः । ततः शरेण विव्याध रामस्तं मृगपोतकम् ७० हेलक्ष्मणेति चोक्त्वासौ निपपात महीतले । मारीचः पर्वताकारस्तेन नष्टो बभूव सः ७१ आकर्ण्य रुदतः शब्दं सीतालक्ष्मणमब्रवीत् । गच्छ लक्ष्मण पुत्र त्वं यत्रायं शब्द उत्थितः ७२ भ्रातुर्ज्येष्ठस्य तत्त्वं वै रुदतः श्रूयते ध्वनिः । प्रायो रामस्य सन्देहं लक्षयेहं महात्मनः ७३ इत्युक्तः स तथा प्राह लक्ष्मणस्तामनिन्दिताम् । न हि रामस्य सन्देहो न भयं विद्यते क्वचित् ७४ इति ब्रुवाणं तं सीता भाविकर्मबलाद्धृतम् । लक्ष्मणं प्राह वैदेही विरुद्धवचनं तदा ७५ मृते रामे तु मामिच्छन्नतस्त्वं न गमिष्यसि । इत्युक्तः स विनीतात्मा असहन्नप्रियं वचः ७६ जगाम राममन्वेष्टुं तदा पार्थिवनन्दनः । सन्यासवेषमास्थाय रावणोपि दुरात्मवान् ७७ स सीतापार्श्वमासाद्य वचनं चेदमुक्तवान् । आगतो भरतः श्रीमान् अयोध्याया महामतिः ७८ रामेण सह सम्भाष्य स्थितवांस्तत्र कानने । मां च प्रेषितवान् रामो विमानमिदमारुह ७९ अयोध्यां याति रामस्तु भरतेन प्रसादितः । मृगबालं तु वैदेहि क्रीडार्थं ते गृहीतवान् ८० क्लेशितासि महारण्ये बहुकालं त्वमीदृशम् । सम्प्राप्तराज्यस्ते भर्ता रामः स रुचिराननः ८१ लक्ष्मणश्च विनीतात्मा विमानमिदमारुह । इत्युक्ता सा तथा गत्वा नीता तेन महात्मना ८२ आरुरोह विमानं तु छद्मना प्रेरिता सती । तत् जगाम ततः शीघ्रं विमानं दक्षिणां दिशम् ८३ ततः सीता सुदुःखार्ता

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

विललाप सुदुःखिता। विमाने खेपि रोदन्त्याश्चक्रेस्पर्शं न राक्षसः ८४ रावणः स्वेन रूपेण बभूवाथ महातनुः। दशग्रीवं महाकायं दृष्ट्वा सीता सुदुःखिता ८५ हा राम वञ्चिताप्यहं केनापि छद्मरूपिणा। रक्षसा घोररूपेण त्रायस्वेति भयार्दिता ८६ हे लक्ष्मण महाबाहो ह्यहं दुष्टेन रक्षसा। द्रुतमागत्य रक्षस्व नीयमानामथाकुलाम् ८७ एवं प्रलपमानायाः सीतायास्तन्महत्स्वनम्। आकर्ण्य गृध्रराजस्तु जटायुस्तत्र चागतः ८८ तिष्ठ रावण दुष्टात्मन् मुञ्च मुञ्चात्र मैथिलीम्। इत्युक्त्वा युयुधे तेन जटायुस्तत्र वीर्यवान् ८९ पक्षाभ्यां ताडयामास जटायुस्तस्य वक्षसि। ताडयन्तं तु तं मत्वा बलवानिति रावणः ९० तुण्डचंचुप्रहारैस्तु भृशं तेन प्रपीडितः। तत उत्पाद्य वेगेन चन्द्रहासमसिं महत् ९१ जघान तेन दुष्टात्मा जटायुं धर्मचारिणम्। निपपात महीपृष्ठे जटायुः क्षीणचेतनः ९२ उवाच च दशग्रीवं दुष्टात्मन्न त्वया हतः। चन्द्रहासस्य वीर्येण हतोहं राक्षसाधम ९३ निरायुधं को हनेन्मूढ सायुधस्त्वामृते जनः। सीतापहरणं विद्धि मृत्युस्ते दुष्ट राक्षस ९४ दुष्ट रावण रामस्त्वां वधिष्यति न संशयः। रुदती दुःखशोकार्ता जटायुं प्राह मैथिली ९५ मत्कृते मरणं यस्मात्त्वया प्राप्तं द्विजोत्तम। तस्माद्रामप्रसादेन विष्णुलोकमवाप्स्यसि ९६ यावद्रामेण संगस्ते भविष्यति महाद्विज। तावत्तिष्ठन्तु ते प्राणा इत्युक्त्वा तं खगोत्तमम् ९७ ततस्तान्यर्पितान्यङ्गाद्भूषणानि विमुच्य सा। शीघ्रं निबध्य वस्त्रेण रामहस्तं गमिष्यथ ९८ इत्युक्त्वा पातयामास भूमौ सीता सुदुःखिता। एवं हृत्वा स सीतां तु जटायुं पात्य भूतले ९९ पुष्पकेण गतः शीघ्रं लङ्कां दुष्टनिशाचरः। अशोकवनिकामध्ये स्थापयित्वा स मैथिलीम् १०० इमामत्रैव

---

१ 'अतो रावण' इति 'ग' पुस्तके।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रक्षध्वं राक्षस्यो विकृताननाः । इत्यादिश्य गृहं यातो रावणो राक्षसेश्वरः १०१ लङ्कानिवासिनश्चोचुरेकान्तं च परस्परम् । अस्याः पुर्या विनाशार्थं स्थापितेयं दुरात्मना १०२ राक्षसीभिर्विरूपाभी रक्ष्यमाणा समन्ततः । सीता च दुःखिता तत्र स्मरन्ती राममेव सा । उवास सा सुदुःखार्ता दुःखिता रुदती भृशम् । 'यथाऽज्ञानखले देवी हंसयाना सरस्वती' १०३ सुग्रीवभृत्या हरयश्चतुरश्च यदृच्छया । वस्त्रबद्धं तयोत्सृष्टं भूषणं गृह्य ते त्वरा १०४ स्वभर्त्रे विनिवेद्योचुः सुग्रीवाय महात्मने । अरण्येभून्महायुद्धं जटायो रावणस्य च १०५ अथ रामश्च तं हत्वा मारीचं माययागतम् । निर्वृत्तं लक्ष्मणं दृष्ट्वा तेन गत्वा स्वमाश्रमम् ६ सीतामपश्यद् दुःखार्तः प्ररुरोद स राघवः । लक्ष्मणश्च महातेजा रुरोद भृशदुःखितः ७ बहुप्रकारमस्वस्थं रुदन्तं राघवं तदा । भूतले पतितं धीमान् उत्थाप्याश्वास्य लक्ष्मणः ८ उवाच वचनं प्राप्तं तदायत्तच्छृणुष्व मे । अतिवेलं महाराज न शोकं कर्तुमर्हसि ९ उत्तिष्ठोत्तिष्ठ शीघ्रं त्वं सीतां मृगयितुं प्रभो । इत्येवं वदता तेन लक्ष्मणेन महात्मना ११० उत्थापितो नरपतिर्दुःखितो दुःखितेन तु । भ्रात्रा सह जगामाथ सीतां मृगयितुं वनम् ११ वनानि सर्वाणि विशोध्य राघवो गिरीन् समस्तान् गिरिसानुगोचरान् । तथा मुनीनामपि चाश्रमान् बहून् तृणादिवल्लीगहनेषु भूमिषु १२ नदीतटे भूमिवरे गुहायां निरीक्षमाणोपि महानुभावः । प्रियामपश्यन् भृशदुःखितस्तदा जटायुषं वीक्ष्य च घातितं नृपः १३ अहो भवान् केन हतस्त्वमीदृशीं दशामवाप्तोसि मृतोसि जीवसि । ममाद्य सर्वं समदुःखितस्य भोः पत्नीवियोगादिह चागतस्य वै १४

---

१ इदमर्धं 'क ख' पुस्तकयोः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

इत्युक्तमात्रे विहगोथ कृच्छ्रादुवाच वाचं मधुरां तदानीम् । शृणुष्व राजन् मम वृत्तमत्र वदामि दृष्टं च कृतं च सद्यः १५ दशाननस्तापपनीय मायया सीतां समारोप्य विमानमुत्तमम् । जगाम खे दक्षिणदिङ्मुखोसौ सीता च माता विललाप दुःखिता १६ आकर्ण्य सीतास्वनमागतोहं सीतां विमोक्तुं स्वबलेन राघव । युद्धं च तेनाहमतीव कृत्वा हतः पुनः खड्गबलेन रक्षसा १७ वैदेहिवाक्यादिह जीवता मया दृष्टो भवान् स्वर्गमितो गमिष्ये । मा राम शोकं कुरु भूमिपाल वधाय दुष्टं सगणं तु नैर्ऋतम् १८ रामो जटायुनेत्युक्तः पुनस्तं चाह शोकतः । स्वस्त्यस्तु ते द्विजवर गतिस्तु परमास्तु ते १९ ततो जटायुः स्वं देहं विहाय गतवान् दिवम् । विमानेन तु रम्येण सेव्यमानोप्सरोगणैः १२० रामोपि दग्ध्वा तद्देहं स्नातो दत्त्वा जलाञ्जलिम् । भ्रात्रा स गच्छन् दुःखार्तो राक्षसीं पथि दृष्टवान् २१ उद्गमन्तीं महोल्काभां विवृतास्यां भयङ्करीम् । क्षयं नयन्तीं जन्तून्वै पातयित्वा गतो रुषा २२ गच्छन् वनान्तरं रामः स कबन्धं ददर्श ह । विरूपं जठरमुखं दीर्घबाहुं घनस्तनम् २३ रुन्धानं राममार्गं तु दृष्ट्वा तं दग्धवान् शनैः । दग्धो सौ दिव्यरूपी तु स्वःस्थो राममभाषत २४ राम राम महाबाहो त्वया मम महामते । विरूपं नाशितं वीर मुनिशापाच्चिरागतम् १२५ त्रिदिवं यामि धन्योस्मि त्वत्प्रसादान्न संशयः । त्वं सीताप्राप्तये सख्यं कुरु सूर्यसुतेन भो २६ वानरेन्द्रेण गत्वा तु सुग्रीवे स्वं निवेद्य वै । भविष्यति नृपश्रेष्ठ ऋष्यमूकगिरिं व्रज २७ इत्युक्त्वा तु गते तस्मिन् रामो लक्ष्मणसंयुतः । सिद्धैस्तु मुनिभिः शून्यमाश्रमं प्रविवेश ह

१ 'इत्युक्तवाक्ये' 'क ख' पुस्तकयोः । २ 'स्वर्गमिष्यामि योगात्' इति 'ग' पुस्तके । ३ 'सत्कृतः' इति 'ग' पुस्तके । ४ 'विरूपं जठरं मुख्यं' इति 'ग' पुस्तके ।



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

२८ तत्रस्थां तापसीं दृष्ट्वा तया संजाप्य संस्थितः । "शबरीं मुनिमुख्यानां सपर्याहतकल्मषाम् । तया संपूजितो रामो बदरादिभिरीश्वरः । साप्येनं पूजयित्वा तु स्वामवस्थां निवेद्य वै २९सीतां त्वं प्राप्स्यसीत्युक्त्वा प्रविश्याग्निं दिवं गता । दिवं प्रस्थाप्य तां चापि जगामान्यत्र राघवः ।" ततो विनीतेन गणान्वितेन भ्रात्रा समेतो जगदेकनाथः। प्रियावियोगेन सुदुःखितात्मा जगाम याम्यां स तु रामदेवः ॥ १३० ॥ इति श्रीनरसिंहपुराणे रामप्रादुर्भावे एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥ ॥

## पञ्चाशत्तमोऽध्यायः ।

॥ मार्कण्डेय उवाच ॥

वालिना कृतवैरोथ दुर्मवर्ती हरीश्वरः । सुग्रीवो दृष्टवान् दूराद् दृष्ट्वाह पवनात्मजम् १ कस्येमौ सुधनुःपाणी चीरवल्कलधारिणौ । पश्यन्तौ सरसीं दिव्यां पद्मोत्पलसमावृताम् २ नानारूपधरावेतौ तापसं वेषमास्थितौ । वालिदूताविह प्राप्ता वितिनिश्चित्य सूर्यजः ३ उत्पपात भयात्रस्तो ऋष्यमूकाद्वनान्तरम् । वानरैः सहितः सर्वैरगस्त्याश्रममुत्तमम् ४ तत्र स्थित्वा स सुग्रीवः प्राह वायुसुतं पुनः । हनूमन् पृच्छ शीघ्रं त्वं गच्छ तापसवेषधृक् ५ कौ हि कस्य सुतौ जातौ किमर्थं तत्र संस्थितौ । ज्ञात्वा सत्यं मम ब्रूहि वायुपुत्र महामते ६ इत्युक्तो हनुमान् गत्वा पम्पातटमनुत्तमम् । भिक्षुरूपी स तं प्राह रामं भ्रात्रा समन्वितम् ७ को भवानिह सम्प्राप्तस्तथ्यं ब्रूहि महामते । अरण्ये निर्जने घोरे कुतस्त्वं किं प्रयोजनम् ८ एवं वदन्तं तं प्राह लक्ष्मणो भ्रातुराज्ञया । प्रवक्ष्यामि निबोध त्वं रामवृत्तान्तमादितः ९ राजा दशरथो नाम बभूव भुवि विश्रुतः ।

१ इदं सार्धपद्यं 'ग' पुस्तके एव ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तस्य पुत्रो महाबुद्धे रामो ज्येष्ठो ममाग्रजः १० अस्याभिषेक आरब्धः कैकेय्या तन्निवारितम् । पितुराज्ञामयं कुर्वन् रामो भ्राता ममाग्रजः ११ मया सह विनिष्क्रम्य सीतया सह भार्यया । प्रविष्टो दण्डकारण्यं नानामुनिसमाकुलम् १२ जनस्थाने निवसतो रामस्यास्य महात्मनः । भार्या सीता तत्र वने केनापि पाप्मना हृता १३ सीतामन्वेषयन्वीरो रामः कमललोचनः । इहायातस्त्वया दृष्ट इति वृत्तान्तमीरितम् १४ श्रुत्वा ततो वचस्तस्य लक्ष्मणस्य महात्मनः । अन्यञ्जितात्मा विश्वासाद्धनूमान्मारुतात्मजः १५ त्वं मे स्वामीइति वदन् रामं रघुपतिं तदा । आश्वास्यानीय सुग्रीवं तयोः सख्यमकारयत् १६ शिरस्यारोप्य पादाब्जं रामस्य विदितात्मनः । सुग्रीवो वानरेन्द्रस्तु उवाच मधुराक्षरम् १७ अद्यप्रभृति राजेन्द्र त्वं मे स्वामी न संशयः । अहं तु तव भृत्यश्च वानरैः सहितः प्रभो १८ त्वच्छत्रुर्मम शत्रुः स्यादद्यप्रभृति राघव । मित्रं ते मम सन्मित्रं त्वद्दुःखं तन्ममापि च १९ त्वत्प्रीतिरेव मत्प्रीतिरित्युक्त्वा पुनराहतम् । वाली नाम मम ज्येष्ठो महाबलपराक्रमः २० भार्यापहारी दुष्टात्मा मदनासक्तमानसः । त्वामृते पुरुषव्याघ्र नास्ति हन्ताद्य वालिनम् २१ "तं वधं त्वं महाबाहो रामदेव रघूत्तम । इत्युक्तस्तं वधिष्यामि राम आह कपीश्वरम् । तं हत्वा तव दास्यामि पत्नीं राज्यं च वालिनः । सुग्रीवस्तमुवाचाथ प्रत्ययार्थमथात्मनः । क्षमापयन्रघुपतिं वालीबलविदव्ययम् ।" युगपत्सप्ततालांस्तु तरून्यो वै वधिष्यति । स तं वधिष्यतीत्युक्तं पुराणज्ञैर्नृपात्मज २२ तत्प्रियार्थं हि रामोपि श्रीमांश्छित्त्वा महातरून् । अर्धाकृष्टेन बाणेन युगपद्रघुनन्दनः २३ विध्वा महातरून् रामः सुग्रीवं प्राह पार्थिवम् । वालिना गच्छ युध्य-

१ इदं सार्धं पद्य द्वयं 'क' पुस्तके न ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्व कृतचिन्हो रवेः सुत २४ इत्युक्तः कृतचिन्होयं युद्धं चक्रेथ वालिना । रामोपि तत्र गत्वाथ शरेणैकेन वालिनम् २५ विव्याध वीर्यवान् वाली पपात च ममार च । वित्रस्तं वालिपुत्रं तु अङ्गदं विनयान्वितम् २६ रणशौण्डं यौवराज्ये नियुक्त्वा राघवस्तदा । तां च तारां तथा दत्त्वा रामश्च रविसूनवे २७ सुग्रीवं प्राह धर्मात्मा रामः कमललोचनः । राज्यमन्त्रेषय स्वं त्वं कपीनां पुनराव्रज २८ त्वं सीतान्वेषणे यत्नं कुरु शीघ्रं हरीश्वर । इत्युक्तः प्राह सुग्रीवो रामं लक्ष्मणसंयुतम् २९ प्रावृट्कालो महान् प्राप्तः साम्प्रतं रघुनन्दन । वानराणां गतिर्नास्ति वने वर्षति वासवे ३० गते तस्मिंस्तु राजेन्द्र प्राप्ते शरदि निर्मले । चारान्संप्रेषयिष्यामि वानरान् दिक्षु राघव ३१ इत्युक्त्वा रामचन्द्रं स तं प्रणम्य कपीश्वरः । पम्पापुरं प्रविश्याथ रेमे तारासमन्वितः ३२ रामोपि विधिवद्भ्रात्रा शैलसानौ महावने । निवासं कृतवान् शैले नीलकण्ठे महामतिः ३३ प्रावृट्काले गते कृच्छ्रात् प्राप्ते शरदि राघवः । सीतावियोगाद्व्यथितः सौमित्रिं प्राह लक्ष्मणम् ३४ उल्लङ्घितस्तु समयः सुग्रीवेण ततो रुषा । लक्ष्मणं प्राह काकुत्स्थो भ्रातरं भ्रातृवत्सलः ३५ गच्छ लक्ष्मण दुष्टोसौ नागतः कपिनायकः । गते तु वर्षाकालेहमागमिष्यामि तेन्तिकम् ३६ अनेकैर्वानरैः सार्द्धमित्युक्त्वासौ तदा गतः । तत्र गच्छ त्वरायुक्तो यत्रास्ते कपिनायकः ३७ तं दुष्टमग्रतः कृत्वा हरिसेनासमन्वितम् । रमन्तं तारया सार्धं शीघ्रमानय मां प्रति ३८ नात्रागच्छति सुग्रीवो यद्यसौ प्राप्तभूतिकः । तदा त्वयैवं वक्तव्यः सुग्रीवोऽनृतभाषकः ३९ वालिहन्ता शरो दुष्ट करे मेद्यापि तिष्ठति । स्मृत्वैतदाचर कपे रामवाक्यं हृतं तव ४० इत्युक्तस्तु तथेत्युक्त्वा रामं

---

१ इत्युक्तस्तमनुज्ञातः । इति 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नत्वा च लक्ष्मणः पंम्पापुरं जगामाथ सुग्रीवो यत्र तिष्ठति। दृष्ट्वा स तत्र सुग्रीवं कपिराजं बभाष वै ४१ ताराभोगविषक्त-स्त्वं रामकार्यपराङ्मुखः । किं त्वया विस्मृतं सर्वं रामाग्रे समयं कृतम् ४२ सीतामन्विष्य दास्यामि यत्र क्वापीति दुर्मते । हत्वा तु वालिनं राज्यं येन दत्तं पुरा तव ४३ त्वामृते कोऽन्यमन्येत कपीन्द्र पापचेतस । प्रतिश्रुत्य च रामस्य भार्याहीनस्य भूपते ४४ साहाय्यं ते करोमीति देवाग्निजलसन्निधौ । ये ये च शत्रवो राजं स्ते ते च मम शत्रवः ४५ मित्राणि यानि ते देव तानि मित्राणि मे सदा । सीतामन्वेषितुं राजन् वानरैर्बहुभिर्वृतः ४६ सत्यं यास्यामि ते पार्श्वमित्युक्त्वा कोऽन्यथाकरोत् । त्वामृते पापिनं दुष्टं रामदेवस्य संनिधौ ४७ कारयित्वा तु तेनैवं स्वकार्यं दुष्टवानर । ऋषीणां सत्यवद्वाक्यं त्वयि दृष्टं मयाधुना ४८ जनवृत्तविदां लोके सर्वज्ञानां महात्मनाम् । न तं पश्यामि लोकेस्मिन् कृतं प्रतिकरोति यः ४९ सर्वस्य हि कृतार्थस्य मतिरन्या प्रवर्तते । वत्सः क्षीरक्षयं दृष्ट्वा परित्यज्यति मातरम् ५० शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि । कृत-घ्नस्य कपे दुष्ट न दृष्टा निष्कृतिः पुरा ५१ कृतघ्नता न कार्या ते त्वत्कृतं समयं स्मर । एह्येह्यागच्छ शरणं काकुत्स्थं हितपा-लकम् ५२ यदि नायासि च कपे रामवाक्यमिदं शृणु । न यिष्ये मृत्युसदनं सुग्रीवं वालिनं यथा ५३ स शरो विद्यते-स्माकं येन वाली हतः कपिः । लक्ष्मणेनैवमुक्तोसौ सुग्रीवः कपिनायकः ५४ निर्गत्य तु नमश्चक्रे लक्ष्मणं मन्त्रिणोदितः । उवाच च महात्मानं लक्ष्मणं वानराधिपः । अज्ञानकृतपापा-नामस्माकं क्षन्तुमर्हसि । समयः कृतो मया राज्ञा रामेणामि-ततेजसा ५५ यस्तदानीं महाभाग तमद्यापि न लङ्घये । यास्यामि

१ 'आदिष्टो सौगतस्तत्र' इति 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

निखिलैरद्य कपिभिर्नृपनन्दन ५६ त्वया सह महावीर रामपार्श्वं न संशयः। मां दृष्ट्वा तत्र काकुत्स्थो यद्रक्ष्यति च मां प्रति ५७ तत्सर्वं शिरसा गृह्य करिष्यामि न संशयः। सन्ति मे हरयः शूराः सीतान्वेषणकर्मणि ५८ तान्यहं प्रेषयिष्यामि दिक्षु सर्वासु पार्थिव। इत्युक्तः कपिराजेन सुग्रीवेण स लक्ष्मणः ५९ याहि शीघ्रं गमिष्यामो रामपार्श्वमितोऽधुना। सेना चाहूयतां वीर ऋक्षाणां हरिणामपि ६० यान् दृष्ट्वा प्रीतिरभ्येति राघवस्ते महामते। इत्युक्तो लक्ष्मणेनाथ सुग्रीवः स तु वीर्यवान् ६१ पार्श्वस्थं युवराजानमङ्गदं संज्ञयाऽब्रवीत्। सोपि निर्गत्य सेनानीमाह सेनापतिं तदा ६२ तैराहूताः समागत्य ऋक्ष वानरकोटयः। गुहास्थाश्च गिरिस्थाश्च वृक्षस्थाश्चैव वानराः ६३ तैः सार्द्धं पर्वताकारैर्वानरैर्भीमविक्रमैः। सुग्रीवः शीघ्रमागत्य ववन्दे राघवं तदा ६४ लक्ष्मणोपि नमस्कृत्य रामं भ्रातरमब्रवीत्। प्रसादं कुरु सुग्रीवे विनीते चाधुना नृप ६५ इत्युक्तो राघवस्तेन भ्रात्रा सुग्रीवमब्रवीत्। आगच्छात्र महावीर सुग्रीव कुशलं तव ६६ श्रुत्वेत्थं रामवचनं प्रसन्नं च नराधिपम्। शिरस्यञ्जलिमाधाय सुग्रीवो राममब्रवीत् ६७ तदा मे कुशलं राजन् सीतादेवी तव प्रभो। अन्विष्य तु यदा दत्ता मया भवति नान्यथा ६८ इत्युक्ते वचने तेन हनूमान्मारुतात्मजः। नत्वा रामं बभाषैनं सुग्रीवं कपिनायकम् ६९ शृणु सुग्रीव मे वाक्यं राजायं दुःखितो भृशम्। सीतावियोगेन च सदा नाश्नाति च फलादिकम् ७० अस्य दुःखेन सततं लक्ष्मणोयं सुदुःखितः। एतयोरत्र यावस्था तां श्रुत्वा भरतोऽनुजः ७१ दुःखी भवति तद्दुःखाद्दुःखं प्राप्नोति तज्जनः॥ यत एवमतो राजन् सीतान्वेषणमाचरं ७२ इत्युक्ते वचने तत्र वायु-

१ 'सीतान्वेषणमाचर' इति 'ग' पुस्तके।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पुत्रे हनूमति । जाम्बवानति तेजस्वी नत्वा रामं पुरः स्थितः ७३ स प्राह कपिराजानं नीतिमान्नीतिमद्वचः । यदुक्तं वायुपुत्रेण तत्तथेत्यवगच्छ भोः ७४ यत्र क्वापि स्थिता सीता रामभार्या यशस्विनी । पतिव्रता महाभागा वैदेही जनकात्मजा ७५ अद्यापि वृत्तसम्पन्ना इति मे मनसि स्थितम् । न हि कल्याणचित्तायाः सीतायाः केनचिद्भुवि ७६ पराभवोस्ति सुग्रीव प्रेषयाद्यैव वानरान् । इत्युक्तस्तेन सुग्रीवः प्रीतात्मा कपिनायकः ७७ पश्चिमायां दिशि तदा प्रेषयामास तान् कपीन् । अन्वेष्टुं रामभार्यां तां महाबलपराक्रमः ७८ उत्तरस्यां दिशि तदा नियुतान् वानरानसौ । प्रेषयामास धर्मात्मा सीतान्वेषणकर्मणि ७९ पूर्वस्यां दिशि कपींश्च कपिराजः प्रतापवान् । प्रेषयामास रामस्य सुभार्यान्वेषणाय वै ८० इति तान् प्रेषयामास वानरान्वानराधिपः । सुग्रीवो वालिपुत्रं तमङ्गदं प्राह बुद्धिमान् ८१ त्वं गच्छ दक्षिणं देशं सीतान्वेषणकर्मणि । जाम्बवांश्च हनूमांश्च मैन्दो द्विविद एव च ८२ नीलाद्याश्चैव हरयो महाबलपराक्रमाः । अनुयास्यन्ति गच्छन्तं त्वामद्य मम शासनात् ८३ अचिरादेव यूयं तां दृष्ट्वा सीतां यशस्विनीम् । स्थानतो रूपतश्चैव शीलतश्च विशेषतः ८४ केन नीता च कुत्रास्ते ज्ञात्वात्रागच्छ पुत्रक । इत्युक्तः कपिराजेन पितृव्येण महात्मना ८५ अङ्गदस्तूर्णमुत्थाय तस्याज्ञां शिरसा दधे । इत्युक्ते दूरतः स्थाप्य वानरानथ जाम्बवान् ८६ रामं च लक्ष्मणं चैव सुग्रीवं मारुतात्मजम् । एकतः स्थाप्य तानाह नीतिमान्नीतिमद्वचः ८७ श्रूयतां वचनं मह्यं सीतान्वेषणकर्मणि । श्रुत्वा च तद्गृहाणत्वं रोचते यन्नृपात्मज ८८ रावणेन जनस्थानान्नीयमाना तपस्विनी ।

---

१ 'नियुतान्वानरानसौ' इति 'ख' पुस्तके पाठः । २ 'निपुणानसौ' इति 'क ख' पुस्तकयोः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

जटायुना तु सा दृष्टा शक्त्या युद्धं प्रकुर्वता ८९ भूषणानि च दृष्टानि तया क्षिप्तानि तेन वै। तान्यस्माभिः प्रदृष्टानि सुग्रीवायार्पितानि च ९० जटायुवाक्याद्राजेन्द्र सत्यमित्यवधारय। एतस्मात्कारणात्सीता नीता तेनैव रक्षसा ९१ रावणेन महाबाहो लङ्कायां वर्तते तु सा। त्वां स्मरन्ती तु तत्रस्था त्वद्दुःखेन सुदुःखिता ९२ रक्षन्ती यत्नतो वृत्तं तत्रापि जनकात्मजा। त्वद्ध्यानेनैव स्वान् प्राणान् धारयन्ती शुभानना ९३ स्थिता प्रायेण ते देवी सीता दुःखपरायणा। हितमेव च ते राजन् उदधेर्लङ्घनं क्षमम् ९४ वायुपुत्रं हनूमन्तं त्वमत्रादेष्टुमर्हसि। त्वं चाप्यर्हसि सुग्रीव प्रेषितुं मारुतात्मजम् ९५ तमृते सागरं गन्तुं वानराणां न विद्यते। बलं कस्यापि वा वीर इति मे मनसि स्थितम् ९६ क्रियतां मद्वचः क्षिप्रं हितं पथ्यं च नः सदा। इत्युक्ते जाम्बवत्येवं नीतिमल्पाक्षरान्विते ९७ वाक्ये वानरराजोऽसौ शीघ्रमुत्थाय चासनात्। वायुपुत्रसमीपं तु तं गत्वा वाक्यमब्रवीत् ९८ शृणु मद्वचनं वीर हनुमन्मारुतात्मज। अयमिक्ष्वाकुतिलको राजा रामः प्रतापवान् ९९ पितुरादेशमादाय भ्रातृभार्यासमन्वितः। प्रविष्टो दण्डकारण्यं साक्षाद्धर्मपरायणः १०० सर्वात्मा सर्वलोकेशो विष्णुर्मानुषरूपवान्। अस्य भार्या हृता तेन दुष्टेनापि दुरात्मना १ तद्वियोगजदुःखार्तो विचिन्वंस्तां वने वने। त्वया दृष्टो नृपः पूर्वमयं वीरः प्रतापवान् २ एतेन सह संगम्य समयं चापि कारितम्। अनेन निहतः शत्रुर्मम वालिर्महाबलः ३ अस्य प्रसादेन कपे राज्यं प्राप्तं मयाऽधुना। मया च तत्प्रतिज्ञातं अस्य साहाय्यकर्मणि ४ तत्सत्यं कर्तुमिच्छामि त्वद्बलान्मारुतात्मज। उत्तीर्य सागरं वीर दृष्ट्वा सीतामनिन्दिताम् ५ भूयस्तत्तु बलं नास्ति वानराणां त्वया विना। अतस्त्वमेव जानासि स्वामिकार्यं महामते ६ बलवान्नीतिमांश्चैव दक्षस्त्वं दौत्यकर्मणि। तेनैवमुक्तो हनुमान् सुग्रीवेण महात्मना ७ स्वामिनोर्थे

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

न किं कुर्यामीदृशं किं नु भाषसे । इत्युक्तो वायुपुत्रेण रामस्तं पुरतः स्थितम् ८ प्राह वाक्यं महाबाहुर्बाष्पसम्पूर्णलोचनः । सीतां स्मृत्वा सुदुःखार्तः कालयुक्तममित्रजित् ९ त्वयि भारं समारोप्य समुद्रतरणादिकम् । सुग्रीवः स्थाप्यते ह्यत्र मया सार्धं महामते ११० हनूमंस्तत्र गच्छ त्वं मत्प्रीत्या कृतनिश्चयः । ज्ञातीनां च तथा प्रीत्यै सुग्रीवस्य विशेषतः ११ प्रायेण रक्षसा नीता भार्या मे जनकात्मजा । तत्र गच्छ महावीर यत्र सीता व्यवस्थिता १२ यदि पृच्छति सादृश्यं मदाकारमशेषतः । अतो निरीक्ष्य मां भूयो लक्ष्मणं च ममानुजम् १३ ज्ञात्वा सर्वाङ्गं लक्ष्म सकलं चावयोरिह । नान्यथा विश्वसेत्सीता इति मे मनसि स्थितम् १४ इत्युक्तो रामदेवेन प्रभञ्जनसुतो बली । उत्थाय तत्पुरः स्थित्वा कृताञ्जलिरुवाच तम् १५ जानामि लक्षणं सर्वं युवयोस्तु विशेषतः । गच्छामि कपिभिः सार्द्धं त्वं शोकं मा कुरुष्व वै १६ अन्यच्च देह्यभिज्ञानं विश्वासो येन मे भवेत् । सीतायास्तव देव्यास्तु राजन् राजीवलोचन १७ इत्युक्तो वायुपुत्रेण रामः कमललोचनः । अंगुलीयकमुन्मुच्य दत्तवान् रामचिह्नितम् १८ तद्गृहीत्वा तदा सोपि हनूमान्मारुतात्मजः । रामं प्रदक्षणीकृत्य लक्ष्मणं च कपीश्वरम् १९ उत्पपात ततो धीमान् हनूमानञ्जनीसुतः । सुग्रीवोपि च ताञ्छ्रुत्वा वानरान् गन्तुमुद्यतान् । "आज्ञेयानाज्ञापयति वानरान्बलदर्पितान् ॥ शृण्वन्तु वानराः सर्वे शासनं मम भाषितम् । विलम्बनं न कर्तव्यंयुष्माभिः पर्वतादिषु ॥ द्रुतं गत्वा तु तां वीक्ष्य आगन्तव्यमनिन्दिताम् । रामपत्नीं महाभागां स्थास्येहं रामसन्निधौ ॥ कर्तनं वा करिष्यामि अन्यथा कर्णनासयोः । एवं तान्प्रेषयित्वा

---

१ 'मां दक्ष मदाकारं विशेषत' इति 'ग' पुस्तके पाठः । २'नत्वा ततो जगामाशु' इति 'ग' पुस्तके । ३ इमे चिन्हमध्यस्थाः श्लोका 'ग' पुस्तक एव ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तु आज्ञापूर्वं कपीश्वरः ॥ अथ ते वानरा याताः पश्चिमादिषु दिक्षु वै । ते सानुषु समस्तेषु गिरीणामपि मूर्द्धसु ॥ नदीतीरेषु सर्वेषु मुनीनामाश्रमेषु च । कन्दरेषु च सर्वेषु वनेषु पवनेषु च २० वृक्षेषु वृक्षगुल्मेषु गुहासु च शिलासु च । सह्यपर्वतपार्श्वेषु विन्ध्यसागरपार्श्वयोः ॥ हिमवत्यपि शैले च तथा किंपुरुषादिषु । मनुदेशेषु सर्वेषु सप्तपातालकेषु च ॥ मध्यदेशेषु सर्वेषु काश्मीरेषु महाबलाः । पूर्वदेशेषु सर्वेषु कामरूपेषु कोशले ॥ तीर्थस्थानेषु सर्वेषु सप्तकोङ्कनकेषु च । यत्र तत्रैव ते सीतामदृष्ट्वा पुनरागताः २१ आगत्य ते नमस्कृत्य रामलक्ष्मणपादयोः । सुग्रीवं च विशेषेण नास्माभिः कमलेक्षणा । दृष्टा सीता महाभागेत्युक्त्वा तांस्तत्र तस्थिरे । ततस्तं दुःखितं प्राह रामदेवं कपीश्वरः ॥ सीतां दक्षिणदिग्भागे स्थितां द्रष्टुं वने नृप । शक्यं वानरसिंहेन वायुपुत्रेण धीमता । दृष्ट्वा सीतामिहायाति हनूमान्नात्र संशयः । स्थिरो भव महाबाहो राम सत्यमिदं वचः लक्ष्मणोऽप्याह शकुनं तत्र वाक्यमिदं तदा । सर्वथा दृष्टसीतस्तु- हनुमानागमिष्यति २२ इत्याश्वास्य स्थितौ तत्र रामं सुग्रीवलक्ष्मणौ । अथाङ्गदं पुरस्कृत्य ये गता वानरोत्तमाः २३ यत्नादन्वेषणार्थाय रामपत्नीं यशस्विनीम् । अदृष्ट्वा श्रममापन्नाः कृच्छ्रभूतास्तदा वने २४ भक्षणेन विहीनास्ते क्षुधया च प्रपीडिताः । भ्रमन्तो गहनेऽरण्ये क्वापि दृष्टा च सुप्रभा २५ गुहानिवासिनी सिद्धा ऋषिपत्नी ह्यनिन्दिता । सा च तानागतान् दृष्ट्वा स्वाश्रमं प्रति वानरान् २६ आगताः कस्य यूयं तु कुतः किं तु प्रयोजनम् । इत्युक्ते जाम्बवानाह तां सिद्धां सुमहामतिः २७ सुग्रीवस्य वयं भृत्या आगता ह्यत्र शोभने । रामभार्यार्थमनघे सीतान्वेषणकर्मणि २८ कांदिग्भूता निराहारा अदृष्ट्वा जनकात्मजाम् । इत्युक्ते जाम्बवत्यत्र पुनस्तानाह सा शुभा २९ जानानि रामं सीतां च लक्ष्मणं च कपीश्वरम् ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

भुङ्क्ष्वमत्र मे दत्तमाहारं च कपीश्वराः ३० रामकार्यागतास्त्वत्र यूयं रामसमा मम । इत्युक्त्वा चामृतं तेषां योगाद्दत्त्वा तपस्विनी ३१ भोजयित्वा यथाकामं भूयस्तानाह तापसी । सीतास्थानं तु जानाति सम्पातिर्नाम पक्षिराट् ३२ आस्थितो वै वने सोपि महेन्द्रे पर्वते द्विजः । मार्गेणानेन हरयस्तत्र यूयं गमिष्यथ ३३ स वक्ति सीतां सम्पातिर्दूरदर्शी तु यः खगः । तेनादिष्टं तु पन्थानं पुनरासाद्य गच्छथ ३४ अवश्यं जानकीं सीतां द्रक्ष्यते पवनात्मजः । तथैवमुक्ताः कपयः परां प्रीतिमुपागताः ३५ हृष्टास्ते जनमापन्नास्तां प्रणम्य प्रतस्थिरे । महेन्द्रेनुगता वीरा वानरास्तद्दिदृक्षया ३६ तत्र सम्पातिमासीनं दृष्ट्वन्तः कपीश्वराः । तानुवाचाथ सम्पातिर्वानरानागतान् द्विजः ३७ के यूयमिति सम्प्राप्ताः कस्य वा ब्रूत मा चिरम् । इत्युक्ते वानरा ऊचुर्यथावृत्तमनुक्रमात् ३८ रामदूता वयं सर्वे सीतान्वेषणकर्मणि । प्रेषिताः कपिराजेन सुग्रीवेण महात्मना ३९ त्वां द्रष्टुमिह सम्प्राप्ताः सिद्धाया वचनाद्द्विज । सीतास्थानं महाभाग त्वं नो वद महामते ४० इत्युक्तो वानरैः श्येनो वीक्षां चक्रे सुदक्षिणाम् । सीतां दृष्ट्वा सलङ्कायामशोकाख्ये महावने ४१ स्थितेति कथितं तेन जटायुस्तु मृतस्तव । भ्रातेति चोचुः स स्नात्वा दत्वा तस्योदकाञ्जलिम् ४२ योगमास्थाय स्वं देहं विससर्ज महामतिः । ततस्तं वानरा दग्ध्वा दत्त्वा तस्योदकाञ्जलिम् ४३ गत्वा महेन्द्रशृङ्गं ते तमारुमाह्य क्षणं स्थिताः । सागरं वीक्ष्य ते सर्वे परस्परमथाब्रुवन् ४४ रावणेनैव भार्या सा नीता रामस्य निश्चितम् । सम्पातिवचनादद्य संज्ञातं सकलं हि तत् ४५ वानराणां तु कश्चात्र उत्तीर्य लवणोदधिम् । लङ्कां प्रविश्य दृष्ट्वा तां रामपत्नीं यशस्विनीम् ४६

---

१ 'महेन्द्राद्रिं गता वीरा' इति 'ग' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पुनश्चोदधितरणे शक्तिं ब्रूत हि शोभनाः। इत्युक्तो जाम्बवान् प्राह सर्वे शक्तास्तु वानराः ४७ सागरोत्तरणे किं तु कार्यमन्यस्य संभवेत्। तत्र दक्षोयमेवात्र हनूमानिति मे मतिः ४८ कालक्षेपो न कर्तव्यो मासार्द्धमधिकं गतम्। यद्यदृष्ट्वा तु गच्छामो वैदेहीं वानरर्षभाः ४९ कर्णनासादि नः स्वाङ्गं निकृन्तति कपीश्वरः। तस्मात्प्रार्थ्यः स चास्माभिर्वायुपुत्रस्तु मे मतिः। इत्युक्तास्ते तथेत्यूचुर्वानरा वृद्धवानरम्॥ ततस्ते प्रार्थयामासुर्वानराः पवनात्मजम् ५० हनूमन्तं महाप्राज्ञं दक्षं कार्येषु चाधिकम्। गच्छ त्वं रामभृत्यस्त्वं रावणस्य भयाय च ५१ रक्षस्व वानरकुलमस्माकमञ्जनीसुत। इत्युक्तस्तांस्तथेत्याह वानरान् पवनात्मजः ५२ रामप्रयुक्तश्च पुनः स्वभर्तृणा पुनर्महेन्द्रे कपिभिश्च नोदितः। गन्तुं प्रचक्रे मतिमञ्जनीसुतः समुद्रमुत्तीर्य निशाचरालयम् ॥ १५३ ॥ ॥ इति श्रीनरसिंहपुराणे रामप्रादुर्भावेपञ्चाशोऽध्यायः ॥ ५० ॥ ॥

---

## ॥ एकपञ्चाशोऽध्यायः ॥

### ॥ मार्कण्डेय उवाच ॥

स तु रावणनीतायाः सीतायाः परिमार्गणम्। इयेष पदमन्वेष्टुं वरुणाचरिते पथि १ अञ्जलिं प्राङ्मुखं कृत्वा सैगणायात्मयोनये। मनसा वन्द्य रामं च लक्ष्मणं च महारथम् २ सागरं सरितश्चैव प्रणम्य शिरसा कपिः। ज्ञातींश्चैव परिष्वज्य कृत्वा चैव प्रदक्षिणाम् ३ अरिष्टं गच्छ पन्थानं पुण्यवायुनिषेवित। पुनरागमनायेति वानरैरभिपूजितः ४ अञ्जसा त्वं तथा वीर्य-

---

१ 'मा सार्धमपि वो गतम्' इति 'ग' पुस्तके पाठः। २ 'चारणाचरिते पथि' इति 'ग' पुस्तके। ३ 'सचनन्वात्मजं रवेः' इति 'ग' पुस्तके पाठः।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

माविवेशाथ वीर्यवान् । मार्गमालोकयन् दूरादूर्ध्वं प्रणिहितेक्षणः ५ संपूर्णमिव चात्मानं भावयित्वा महाबलः । उत्पपात गिरेः शृङ्गान्निष्पीड्य गिरिमम्बरम् ६ पितुर्मार्गेण यातस्य वायुपुत्रस्य धीमतः । रामकार्यपरस्यास्य सागरेण प्रचोदितः ७ विश्रामार्थं समुत्तस्थौ मैनाको लवणोदधेः । तं निरीक्ष्य निपीड्याथ रयात्संभाष्य सादरम् ८ उत्पतंश्च वने वीरः सिंहिकास्यं महाकपिः । 'आस्यप्राप्तं प्रविश्याथ वेगेनान्तर्विनिसृतः' ९ प्रविश्य गतवान् शीघ्रं वायुपुत्रः प्रतापवान् । लङ्घयित्वा तु तं देशं सागरं पवनात्मजः १० त्रिकूटशिखरे रम्ये वृक्षाग्रे निपपात ह । तस्मिन् स पर्वतश्रेष्ठे दिनं नीत्वा दिनक्षये ११ संध्यामुपास्य हनुमान् ततो लङ्कां शनैर्निशि । लङ्काभिधां विनिर्जित्य देवतां प्रविवेश ह १२ लङ्कामनेकरत्नाढ्यां बह्वाश्चर्यसमन्विताम् । राक्षसेषु प्रसुप्तेषु नीतिमान् पवनात्मजः १३ रावणस्य ततो वेश्म प्रविवेशाथ ऋद्धिमत् । शयानं रावणं दृष्ट्वा तल्पे महति वानरः १४ 'नासापुटैर्घोरकारैर्विशद्भिर्वायुमोचकैः । तथैव दशभिर्वक्त्रैर्दंष्ट्रोपेतैस्तु संयुतम् ॥' स्त्रीसहस्रैस्तु दृष्ट्वा तं नानाभरणभूषितम् । तस्मिन् सीतामदृष्ट्वा तु रावणस्य गृहे शुभे १५ तथा स्वनुगृहे शेते राक्षसानां च नायकम्[1] । दुःखितो वायुपुत्रस्तु सम्पातेर्वचनं स्मरन् १६ अशोकवनिकां प्राप्तो नानापुष्पसमन्विताम् । जुष्टां मलयजातेन चन्दनेन सुगन्धिना १७ प्रविश्य शिंशपावृक्षमाश्रितां जनकात्मजाम् । रामपत्नीं समाद्राक्षीत् राक्षसीभिः सुरक्षिताम् १८ अशोकवृक्षमारुह्य पुष्पितं मधुपल्लवम्[2] । आसांचक्रे हरिस्तत्र सेयं सीतेति संस्मरन् १९ सीतां निरीक्ष्य वृक्षाग्रे यावदास्तेऽनिलात्मजः ।

---

१ 'नायकानां च राक्षसम्' इति 'क' पुस्तके पाठः । २ 'पुष्पं मृदुलपल्लव' मिति 'ख' पुस्तके पाठः ।



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्त्रीभिः परिवृतस्तत्र रावणस्तावदागतः २० आगत्य सीतां प्राहाथ प्रिये मां भज कामुकम् । भूषिता भव वैदेही त्यज रामगतं मनः २१ इत्येवं भाषमाणं तमन्तर्धाय तृणं ततः । प्राह वाक्यं शनैः सीता कम्पमानाथ रावणम् २२ गच्छ रावण दुष्ट त्वं परदारपरायण । अचिराद्रामबाणास्ते पिबन्तु रुधिरं रणे २३ तथेत्युक्तो भर्त्सितश्च राक्षसीराह राक्षसः । द्विमासाभ्यन्तरे चैनां वशीकुरुत मानुषीम् २४ यदि नेच्छति मां सीता ततः खादत मानुषीम् । इत्युक्त्वा गतवान् दुष्टो रावणः स्वं निकेतनम् २५ ततो भयेन तां प्राहू राक्षस्यो जनकात्मजाम् । रावणं भज कल्याणि सधनं सुखिनी भव २६ इत्युक्ता प्राह ताः सीता राघवोऽलघुविक्रमः । निहत्य रावणं युद्धे सगणं मां नयिष्यति २७ नाहमन्यस्य भार्या स्यामृते रामं रघूत्तमम् । स ह्यागत्य दशग्रीवं हत्वा मां पालयिष्यति २८ इत्याकर्ण्य वचस्तस्या राक्षस्यो दद्दशुर्भयम् । हन्यतांहन्यतामेषा भक्ष्यतांभक्ष्यतामियम् २९ ततस्तास्त्रिजटा प्राह स्वप्ने दृष्टमनिन्दिता । शृणुध्वं दुष्टराक्षस्यो रावणस्य विनाशनः ३० रक्षोभिः सह सर्वैस्तु रावणस्य मृतिप्रदः । लक्ष्मणेन सह भ्रात्रा रामस्य विजयप्रदः ३१ स्वप्नः शुभो मया दृष्टः सीतायाश्च पतिप्रदः । त्रिजटावाक्यमाकर्ण्य सीतापार्श्वं विसृज्य ताः ३२ राक्षस्यस्ता ययुः सर्वाः सीतामाहाञ्जनीसुतः । कीर्तयन् रामवृत्तान्तं सकलं पवनात्मजः ३३ तस्यां विश्वासमानीय दत्त्वा रामांगुलीयकम् । सम्भाष्य लक्ष्मणं सर्वं रामलक्ष्मणयोस्ततः ३४ महत्या सेनया युक्तः सुग्रीवः कपिनायकः । तेन सार्द्धमिहागत्य रामस्तव पतिः प्रभुः ३५ लक्ष्मणश्च महावीरो देवरस्ते शुभानने । रावणं सगणं हत्वा त्वामितोदाय गच्छति ३६ इत्युक्ते सा तु विश्वस्ता वायुपुत्रमथाब्रवीत् । कथमत्रागतो वीर त्वमुत्तीर्य महोदधिम् ३७ इत्याकर्ण्य वचस्तस्याः पुनस्तामाह वानरः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

गोष्पदवन्मयोत्तीर्णः समुद्रोयं वरानने ३८ जपता रामरामेति सागरो गोष्पदायते। दुःखमग्नासि वैदेहि स्थिरा भव शुभानने ३९ क्षिप्रं पश्यसि रामं त्वं सत्यमेतद्ब्रवीमि ते। इत्याश्वास्य सतीं सीतां दुःखितां जनकात्मजाम् ४० 'तं चूडामणिमाणिक्यं श्रुत्वा काकपराभवम्'॥ नत्वा तां प्रस्थितो वीरो गन्तुं कृतमतिः कपिः। ततो विमृश्य तद्भङ्क्त्वा क्रीडावनमशेषतः ४१ तोरणस्थो निनादोच्चै रामो जयति वीर्यवान्। अनेकान् राक्षसान् हत्वा सेनाः सेनापतींश्च सः ४२ तदा त्वक्षकुमारं तु हत्वा रावणसैनिकम्। साश्वं ससारथिं हत्वा इन्द्रजित्तं गृहीतवान्। रावणस्य पुरःस्थित्वा रामं संकीर्त्य लक्ष्मणम् ४३ सुग्रीवं च महावीर्यं दग्ध्वा लङ्कामशेषतः। निर्भर्त्स्य रावणं दुष्टं पुनः सम्भाष्य जानकीम् ४४ भूयः सागरमुत्तीर्य ज्ञातीनासाद्य वीर्यवान्। सीतादर्शनमावेद्य हनूमांश्चैव पूजितः ४५ वानरैः सार्द्धमागत्य हनूमान्मधुवनं महत्। निहत्य रक्षपालांस्तु पाययित्वा च तन्मधु ४६ [1]सर्वे दधिमुखं पात्य हर्षितो हरिभिः सह। खमुत्पत्य च संप्राप्य रामलक्ष्मणपादयोः ४७ नत्वा तु हनुमांस्तत्र सुग्रीवं च विशेषतः। आदितः सर्वमावेद्य समुद्रतरणादिकम् ४८ कथयामास रामाय सीता दृष्टा मयेति वै। अशोकवनिकामध्ये सीता देवी सुदुःखिता ४९ राक्षसीभिः परिवृता त्वां स्मरन्ती च सर्वदा। अश्रुपूर्णमुखी दीना तव पत्नी वरानना ५० शीलवृत्तसमायुक्ता तत्रापि जनकात्मजा। सर्वत्रान्वेष्यमाणेन मया दृष्टा पतिव्रता ५१ मया संभाषिता सीता विश्वस्ता रघुनन्दन। अलङ्कारश्च सुमणिस्तया ते प्रेषितः प्रभो ५२ [2]'इत्युक्त्वा दत्तवांस्तस्मै चूडामणिमनुत्तमम्'। इदं च वचनं तुभ्यं पत्न्या [3]संप्रेषितं शृणु। चित्रकूटे मदङ्के तु

---

१ इदमर्धं 'ख' पुस्तके गलितम्। २ इदं श्लोकार्धं 'क' पुस्तके न

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सुप्ते त्वयि महाव्रत ५३ वायसाभिभवं राजंस्तत्किल स्मर्तुमर्हसि। अल्पापराधे राजेन्द्र त्वया बलिभुजि प्रभो ५४ 'यत्कृतं तत्र कर्तुं च शक्यं देवासुरैरपि'। ब्रह्मास्त्रं तु तदोत्सृष्टं रावणं किं न जेष्यसि। इत्येवमादि बहुशः प्रोक्त्वा सीता रुरोदह ५५ एवं तु दुःखिता सीता तां मोक्तुं यत्नमाचर। इत्येवमुक्ते पवनात्मजेन सीतावचस्तच्छुभभूषणं च । श्रुत्वा च दृष्ट्वा च रुरोद रामः कपिं समालिङ्ग्य शनैः प्रतस्थे ॥ ५६ ॥ ॥ इति श्रीनरसिंहपुराणे रामप्रादुर्भावे एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

# द्विपञ्चाशोऽध्यायः ।

॥ मार्कण्डेय उवाच ॥

इति श्रुत्वा प्रियावार्तां वायुपुत्रेण कीर्तिताम् । रामो गत्वा समुद्रान्तं वानरैः सह विस्तृतैः १ सागरस्य तटे रम्ये तालीवनविराजिते । सुग्रीवो जाम्बवांश्चाथ वानरैरतिहर्षितैः २ संख्यातीतैर्वृतः श्रीमान् नक्षत्रैरिव चन्द्रमाः। अनुजेन च धीरेण वीक्ष्य तस्थौ सरित्पतिम् ३ रावणेनाथ लङ्कायां ससूक्तौ भर्त्सितोनुजः। विभीषणो महाबुद्धिः शास्त्रज्ञैर्मन्त्रिभिः सह ४ नरसिंहे महादेवे श्रीधरे भक्तवत्सले । एवं रामेऽचलां भक्तिमागत्य विनयात्तदा ५ कृताञ्जलिरुवाचेदं राममक्लिष्टकारिणम्। राम राम महाबाहो देवदेव जनार्दन ६ विभीषणोस्मि मां रक्ष अहं ते शरणं गतः । इत्युक्त्वा निपपाताथ प्राञ्जली रामपादयोः ७ विदितार्थोथ रामस्तु तमुत्थाप्य महामतिम्। समुद्रतोयैस्तं वीरमभिषिच्य विभीषणम् ८ लङ्काराज्यं तवैवेति प्रोक्त्वा

---

१ इदमर्धं 'ग' पुस्तके एव। २ 'तस्मात्त्वं यत्न माचर' इति 'ग' पुस्तके पाठः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सम्भाष्य तस्थिवान् । ततो विभीषणेनोक्तं त्वं विष्णुर्भुवनेश्वरः ९ अब्धिर्ददातु मार्गं ते दैवतं याचयामहे । इत्युक्त्वा वानरैः सार्द्धं शिष्ये तत्र स राघवः १० 'सेतुबन्धन मात्रा तु महीं व्याप्य जनार्दनः ॥' सुप्ते रामे गतं तत्र त्रिरात्रममितद्युतौ । ततः क्रुद्धो जगन्नाथो रामो राजीवलोचनः ११ संशोषणमपां कर्तुमस्त्रमाग्नेयमाददे । ततोत्थाय वचः प्राह लक्ष्मणश्च रुषान्वितम् १२ क्रोधस्ते लयकर्ता हि एनं जहि महामते । भूतानां रक्षणार्थाय अवतारस्त्वया कृतः १३ क्षन्तव्यं देवदेवेश इत्युक्त्वा धृतवान् शरम् । ततो रात्रित्रये याते क्रुद्धं राममवेक्ष्य सः १४ आग्नेयास्त्राच्च सन्त्रस्तः सागरोभ्येत्य मूर्तिमान् । आह रामं महादेवं रक्ष मामपकारिणम् १५ मार्गो दत्तो मया तेत्र कुशलः सेतुकर्मणि । नलश्च कथितो वीरस्तेन कारय राघव १६ यावदिष्टं तु विस्तीर्णं सेतुबन्धनमुत्तमम् । ततो नलमुखैरन्यैर्वानरैरमितौजसैः १७ बन्धयित्वा महासेतुं तेन गत्वा स राघवः । सुवेलाख्यं गिरिं प्राप्तः स्थितोसौ वानरैर्वृतः १८ हर्म्यस्थलस्थितं दुष्टं रावणं वीक्ष्य चांगदः । रामादेशादथोत्प्लुत्यदूतकर्मसु तत्परः१९ प्रादात्पादप्रहारं तु रोषाद्रावणमूर्द्धनि । विस्मितं तैः सुरगणैर्वीक्षितः सोतिवीर्यवान् २० साधयित्वा प्रतिज्ञां तां सुवेलं पुनरागतः । ततो वानरसेनाभिः संख्यातीताभिरच्युतः२१ रुरोध रावणपुरीं लङ्कां तत्र प्रतापवान् । "रामः समंतादालोक्य प्राह लक्ष्मणमन्तिके २२ तीर्णोर्णवः कवलितेव कपीश्वरस्य सेनाभटैर्झटिति राक्षसराजधानी । यत्पौरुषोचितमिहांकुरितं मया तद् दैवस्य वश्यमपरं धनुषोथ वास्य २३

---

१ 'जगत्पतिः' इति 'ख' पुस्तके । २ इदमर्धं 'ग' पुस्तके पठितम् । 'वरुणं प्रलयं कर्तु' इति 'क ख' पुस्तकयोः पाठः । ३ 'प्रलयं तु तव क्रोधः' इति 'ग' पुस्तके पाठः । ४ 'अपराधिनम्' इति 'ग' पुस्तके पाठः । ५ 'सफलः सेतुकर्मणि' इति पाठो 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

लक्ष्मणः प्राह-कातरजनमनोवलम्बिना किं दैवेन। यावल्ललाट-शिखरं भृकुटिर्न याति यावन्न कार्मुकशिखामधिरोहति ज्या। तावन्निशाचरपतेः पटिमानमेतु त्रैलोक्यमूलविभुजेषु भुजेषु दर्पः २४ तदा लक्ष्मणः रामस्य कर्णे लगित्वा पितृवध्वैरस्मरणे अथ भक्तितावीर्यपरीक्षणायां लक्षणविज्ञानायादिश्यतामङ्गदाय दूत्यम्। रामः साधु इति भणित्वा। अङ्गदं सबहुमानमव-लोक्य आदिशति २५ अङ्गद। पिता ते यद्बाली बलिनि दश-कण्ठे कलितवान्न शक्तास्तद्वक्तुं वयमपि मुदास्येन पुलकः। स एव त्वं व्यावर्त्तयसि तनुजत्वेन पितृताम् ततः किं वक्तव्यं तिलकयति स्पष्टार्थपदवीं २६ अङ्गदः। मौलिमण्डलमिलत्करयुगलेन प्रणम्य यदाज्ञापयति देवः। अवधार्यतां २७ किं प्राकारविहारतोरणवतीं लङ्कामिहैवानये किंवा सैन्यमहं द्रुतं रघुपते तत्रैव सम्पादये। अत्यल्पं कुलपर्वतैरविरलैर्बध्नामि वा सागरम् देवादेशय किं करोमि सकलं दोर्दण्डसाध्यं मम २८ श्रीरामस्तद्वचनमात्रेणैव तद्भक्तिसामर्थ्यं चावेक्ष्य वदति २९ अज्ञानादथवाधिपत्यरभसा वास्मत्परोक्षे हृता सीतेयं प्रविमुच्यतां इति वचो गत्वा दशास्यं वद। नो चेल्लक्ष्मणमुक्तमार्गणगण-च्छेदोच्छलच्छोणितच्छत्रच्छन्नदिगन्तमन्तकपुरीं पुत्रैर्वृतो यास्यसि ३०अङ्गदः३१ देव। सन्धौ वा विग्रहे वापि मयि दूते दशाननो। अक्षितावाक्षितावापि क्षितिपीठे लुठिष्यति ३२ तदा श्रीरामचन्द्रेण प्रशस्य प्रहितोऽङ्गदः। उक्तिप्रत्युक्तिचातुर्यैः पराजित्यागतो रिपुम् ३३ रावणोपि।" राघवस्य बलं ज्ञात्वा चारैस्तदनुजस्य च। 'वानराणां च भीतोपि निर्भीरिव दशाननः' ३४ लङ्कापुरस्य रक्षार्थमादिदेश स राक्षसान्। आदिश्य सर्वतो दिक्षु पुत्रानाह दशाननः ३५ धूम्राक्षं धूम्रपानं च

---

१ 'रामः सम' मित्यतः रावणोप्येतदन्तं 'ग' पुस्तके। २ इदमर्धं 'क ख' पुस्तकयोः।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

राक्षसा यात मे पुरीम् । पाशैर्बध्नीत तौ मर्त्यौ अमित्रान्तकरी-
र्यवान् । कुम्भकर्णोऽपि मद्भ्राता तुर्यनादैः प्रबोधितः ३६ राक्ष-
साश्चैव संदिष्टा रावणेन महाबलाः ३७ तस्याज्ञां शिरसादाय
युयुधुर्वानरैः सह । युध्यमाना यथाशक्त्या कोटिसंख्यास्तु
राक्षसाः ३८ वानरैर्निधनं प्राप्ता पुनरन्यान्यथादिशत् । पूर्वद्वारे
दशग्रीवो राक्षसानमितौजसः ३९ ते चापि युध्य हरिभिर्नी-
लाद्यैर्निधनं गताः । अथ दक्षिणदिग्भागे रावणेन नियोजिताः
४० ते सर्वे वानरवरैर्दारितास्तु यमं गताः । पश्चिमेऽङ्गदमु-
ख्यैश्च वानरैरतिगर्वितैः ४१ राक्षसाः पर्वताकराः प्रापिता
यमसादनम् । तदुत्तरे तु दिग्भागे रावणेन निवेशिताः ४२
पेतुस्ते राक्षसाः क्रूरा मैन्दाद्यैर्वानरैर्हताः । ततो वानरसंघस्तु
लङ्काप्राकारमुच्छ्रितम् ४३ उत्प्लुत्याभ्यन्तरस्थांश्च राक्षसान्ब-
लदर्पितान् । हत्वा शीघ्रं पुनः प्राप्ताः स्वसेनामेव वानराः ४४
एवं हतेषु सर्वेषु राक्षसेषु दशाननः । रोदमानासु तत्स्त्रीषु नि-
र्गतः क्रोधमूर्च्छितः ४५ द्वारे स पश्चिमे वीरो राक्षसैर्बहुभि-
र्वृतः । क्वासौ रामेति च वदन् धनुष्पाणिः प्रतापवान् ४६
रथस्थः शरवर्षं च विसृजन् वानरेषु सः । ततस्तद्बाणछिन्नाङ्गा
वानरा दुद्रुवुस्तदा ४७ पलायमानांस्तान् दृष्ट्वा वानरान् राघ-
वस्तदा । कस्मात्तु वानरा भग्ना किमेषां भयमागतम् ४८ इति
रामवचः श्रुत्वा प्राह वाक्यं विभीषणः । शृणु राजन् महाबाहो
रावणो निर्गतोऽधुना ४९ तद्बाणछिन्ना हरयः पलायन्ते महा-
मते । इत्युक्तो राघवस्तेन धनुरुद्यम्य रोषितः ५० ज्याघोषत-
लघोषाभ्यां पूरयामास खं दिशः । युयुधे रावणेनाथ रामः
कमललोचनः ५१ सुग्रीवो जाम्बवांश्चैव हनूमानङ्गदस्तथा ।
विभीषणो वानरीश्च लक्ष्मणश्चापि वीर्यवान् ५२ उपेत्य रावणीं
सेनां वर्षन्तीं सर्वसायकान् । हस्त्यश्वरथसंयुक्तां ते निजघ्नुर्महा-
बलाः ५३ रामरावणयोर्युद्धमभूत्तत्रापि भीषणम् । रावणेन विसृ-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ष्टानि शस्त्रास्त्राणि च यानि वै। तानि छित्त्वाथ शस्त्रैस्तु राघवश्च महाबलः ५४शरेण सारथिं हत्वा दशभिश्च महाहयान्। रावणस्य धनुश्छित्त्वा भल्लेनैकेन राघवः ५५ मुकुटं पञ्चदशभिश्छित्त्वा कृत्वा तन्मस्तकं पुनः। सुवर्णपुंखैर्दशभिः शरैर्विव्याध वीर्यवान्। तदा दशास्यो व्यथितो रामबाणैर्भृशं तदा ५६ विवेश मन्त्रिभिर्नीतः स्वपुरीं देवमर्दकः। बोधितस्तूर्यनादैस्तु गजयूथ क्रमैः शनैः ५७ पुनः प्राकारमुल्लङ्घ्य कुम्भकर्णो विनिर्गतः। उत्तुङ्गस्थूलदेहोसौ भीमदंष्ट्रिर्महाबलः ५८ वानरान् भक्षयन् दुष्टो विचचार क्षुधान्वितः। तं दृष्ट्वोत्पत्य सुग्रीवः शूलेनोरस्यताडयत् ५९ कर्णद्वयं कराभ्यां तु छित्त्वा वक्त्रेण नासिकाम्। सर्वतो युध्यमानांश्च रक्षोनाथाद्रणेधिकान्। राघवो घातयित्वा तु वानरेन्द्रैः समंततः ६० चकर्त्त विशिखैस्तीक्ष्णैः कुम्भकर्णस्य कन्धराम्। विजित्येन्द्रजितं साक्षाद्गरुडेनागतेनसः ६१ रामो लक्ष्मणसंयुक्तः शुशुभे वानरैर्वृतः। व्यर्थं गते चेन्द्रजिति कुम्भ कर्णे निपातिते ६२ लङ्कानाथस्ततः क्रुद्धः पुत्रं त्रिशिरसं पुनः अतिकायमहाकायौ देवान्तकनरान्तकौ ६३ यूयं हत्वा तु पुत्राद्या तौ नरौ युधि निघ्नत। तान्नियुज्य दशग्रीवः पुत्रानेवं पुनर्ब्रवीत् ६४ महोदरमहापार्श्वौ सार्द्धमेतैर्महाबलैः। संग्रामेस्मिन् रिपून् हन्तुं युवां व्रजतमुद्यतौ ६५ दृष्ट्वा तानागतांश्चैव युध्यमानान् रणे रिपून्। अनयल्लक्ष्मणः षड्भिः शरैस्तीक्ष्णैर्यमालयम् ६६ वानराणां समूहश्च शिष्टांश्च रजनीचरान्। सुग्रीवेण हतः कुम्भो राक्षसो बलदर्पितः ६७ निकुम्भो वायुपुत्रेण निहतो देवकण्टकः। विरूपाक्षं युध्यमानं गदया तु विभीषणः ६८ भीममैन्दौ च श्वपतिं वानरेन्द्रौ निजघ्नतुः। अङ्गदो जाम्बवांश्चाथ हरयोन्यान्निशाचरान्[१] ६९ युध्यमानस्तु समरे महालक्षं महाचलम्। जघान रामोथ रणे बाणवृष्टिकरं

१ 'युध्यमानस्तु तं भीमं मकराक्षं महाबलम्' इति 'ग' पुस्तके पाठः।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नृप ७० इन्द्रजिन्मन्त्रलब्धं तु रथमारुह्य वै पुनः । वानरेषु च सर्वेषु शरवर्षं ववर्ष सः ७१ रात्रौ तद्बाणभिन्नं तु बलं सर्वं च राघवम् । निश्चेष्टमखिलं दृष्ट्वा जाम्बवत्प्रेरितस्तदा ७२ वीर्यादौषधीः समानीय हनूमान्मारुतात्मजः । भूम्यां शयानमुत्थाप्य रामं हरिगणांस्तथा ७३ तैरेव वानरैः सार्द्धं ज्वलितोल्काकरैर्निशि । दाहयामास लङ्कां तां हस्त्यश्वरथरक्षसाम् ७४ वर्षन्तं शरजालानि सर्वदिक्षु घनो यथा । सभ्रात्रा मेघनादं तं घातयामास राघवः ७५ घातितेष्वथ रक्षःसु पुत्रमित्रादिबन्धुषु । कारितेष्वथ विघ्नेषु होमजप्यादिकर्मणाम् ७६ ततः क्रुद्धो दशग्रीवो लङ्काद्वारे विनिर्गतः । क्वासौ राम इति ब्रूते मानुषस्तापसाकृतिः ७७ योद्धा कपिर्बलेत्युच्चैर्व्याहरद्राक्षसाधिपः । वेगवद्भिर्विनीतैश्च अश्वैश्चित्ररथे स्थितः ७८ अथायान्तं तु तं दृष्ट्वा रामः प्राह दशाननम् । रामोहमत्र दुष्टात्मन्नेहि रावण मां प्रति ७९ इत्युक्ते लक्ष्मणः प्राह रामं राजीवलोचनम् । अनेन रक्षसा योत्स्ये त्वं तिष्ठेति महाबल ८० ततस्तु लक्ष्मणो गत्वा रुरोध शरवृष्टिभिः । विंशद्बाहुविसृष्टैस्तु शस्त्रास्त्रैर्लक्ष्मणं युधि ८१ रुरोध स दशग्रीवः तयोर्युद्धमभून्महत् । देवा व्योम्नि विमानस्था वीक्ष्य तस्थुर्महाबलम् ८२ ततो रावणशस्त्राणि च्छित्त्वास्ते तीक्ष्णसायकैः । लक्ष्मणः सारथिं हत्वा तस्याश्वानपि भल्लकैः ८३ रावणस्य धनुश्छित्त्वा ध्वजं च निशितैः शरैः । वक्षःस्थलं महावीर्यो विव्याध परवीरहा ८४ ततो रथान्निपत्याथ क्षिप्रं राक्षसनायकः । शक्तिं जग्राह कुपितो घण्टानादविनादिनीम् ८५ अग्निज्वालाज्वलजिह्वां महोल्कासदृशद्युतिम् । दृढमुष्ट्या तु निक्षिप्ता शक्तिः सा लक्ष्मणोरसि ८६ विदार्यान्तः प्रविष्टाथ देवास्त्रस्तास्ततोम्बरे । लक्ष्मणं पतितं दृष्ट्वा रुदद्भिर्वानरेश्वरैः ८७ दुःखितः शीघ्रमागम्य तत्पार्श्वे प्राह राघवः ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

क गतो हनुमान् वीरो मित्रो मे पवनात्मजः ८८ यदि जीवति मे भ्राता कथं चित्पतितो भुवि। इत्युक्ते हनुमान् राजन् वीरो विख्यातपौरुषः ८९ बध्वाञ्जलिं बभाषेदं देवनुज्ञां स्थितोस्मि भोः। रामः प्राह महावीर विशल्यकरणी मम ९० अनुजं विरुजं शीघ्रं कुरु मित्र महाबल। ततो वेगात्समुत्पत्य गत्वा द्रोणागिरिं कपिः ९१ बध्वा च शीघ्रमानीय लक्ष्मणं नीरुजं क्षणात्। चकार देवदेवेशैः पश्यतां राघवस्य च ९२ ततः क्रुद्धो जगन्नाथो रामः कमललोचनः। रावणस्य बलं शिष्टं हस्त्यश्वरथराक्षसम् ९३ हत्वा क्षणेन रामस्तु तच्छरीरं तु सायकैः। तीक्ष्णैर्जर्जरितं कृत्वा तस्थिवान्वानरैर्वृतः ९४ अस्तचेष्टो दशग्रीवः संज्ञां प्राप्य शनैः पुनः। उत्थाय रावणः क्रुद्धः सिंहनादं ननाद च। तन्नादश्रवणैर्व्योम्नि वित्रस्तो देवतागणः। एतस्मिन्नेव काले तु रामं प्राप्य महामुनिः ९५ रावणे बद्धवैरस्तु अगस्त्योवै जयप्रदम्। आदित्यहृदयं नाम मन्त्रं प्रादाज्जयप्रदम् ९६ रामोपि जप्त्वा तन्मंत्रमगस्त्योक्तं जयप्रदम्। तद्दत्तं वैष्णवं चापमतुलं सद्गुणं दृढम् ९७ पूजयित्वा तदादाय सज्जं कृत्वा महाबलः। सौवर्णपुंखैस्तीक्ष्णैस्तु शरैर्मर्मविदारणैः ९८ युयुधे राक्षसेन्द्रेण रघुनाथः प्रतापवान्। तयोस्तु युध्यतोस्तत्र भीमशक्त्योर्महामते ९९ परस्परविसृष्टैस्तु व्योम्नि संवर्द्धितोनलः। समुत्थितो नृपश्रेष्ठ रामरावणयोर्युधि १०० सङ्गरे वर्तमाने तु रामो दाशरथिस्तदा। पदातिर्युयुधे वीरो रामोऽनुक्तपराक्रमः १ सहस्राश्वयुतं दिव्यं रथं मातलिमेव च। प्रेषयामास देवेन्द्रो महांतं लोकविश्रुतम् २ रामस्तं रथमारुह्य पूज्यमानः सुरोत्तमैः। मातल्युक्तोपदेशस्तु रामचन्द्रः प्रतापवान् ३ ब्रह्मदत्तवरं दुष्टं ब्रह्मास्त्रेण दशाननम्। जघान वैरिणं क्रूरं रामदेवः प्रतापवान् ४ रामेण निहते तत्र रावणे सगणे रिपौ। इन्द्राद्या देवताः सर्वाः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

परस्परमथाब्रुवन् ५ रामो भूत्वा हरिर्यस्मादस्माकं वैरिणं रणे । अन्यैरवध्यमन्येन जघान युधि रावणम् ६ तस्मात्तं रामनामानमनन्तमपराजितम् । पूजयामोवतीर्यैनमित्युक्त्वा ते दिवौकसः १०७ नानाविमानैः श्रीमद्भिरवतीर्य महीतले । रुद्रेन्द्रवसुचन्द्राद्या विधातारं सनातनम् १०८ विष्णुं जिष्णुं जगन्मूर्तिं सानुजं राममव्ययम् । तं पूजयित्वा विधिवत्परिवार्योपतस्थिरे १०९ रामोयं पश्यतां देवा लक्ष्मणोयं व्यवस्थितः । सुग्रीवो रविपुत्रोयं वायुपुत्रोयमास्थितः ११० अङ्गदाद्या इमे सर्वे इत्यूचुस्ते दिवौकसः । गन्धामोदितदिक्चक्रा भ्रमरालिपदानुगाः ११ देवस्त्रीकरनिर्मुक्ता राममूर्द्धनि शोभिता । पपात पुष्पवृष्टिस्तु लक्ष्मणस्य च मूर्द्धनि १२ ततो ब्रह्मा समागत्य हंसयानेन राघवम् । अमोघाख्येन स्तोत्रेण स्तुत्वाराममवोचत १३

॥ ब्रह्मोवाच ॥

त्वं विष्णुरादिर्भूतानामनन्तो ज्ञानदृगव्यः । त्वमेव शाश्वतं ब्रह्म वेदान्ते विदितं परम् १४ त्वया यदद्य निहतो रावणो लोकरावणः । तस्याशु सर्वलोकानां देवानां कर्मसाधितम् १५ इत्युक्ते पद्मयोनौ तु शङ्करः प्रीतिमास्थितः । प्रणम्य रामं तस्मै तं भूयो दशरथं नृपम् १६ दर्शयित्वा गता देवाः सीता शुद्धेति कीर्तयन् । ततो बाहुबलप्राप्तं विमानं पुष्पकं शुभम् १७ पुनामारोप्य सीतां तां आदिष्टः पवनात्मजः । ततस्तु जानकीं देवीं विशोकां भूषणान्विताम् १८ वन्दितां वानरेन्द्रैस्तु सार्द्धं भ्राता महाबलः । [2]प्रतिष्ठाप्य महादेवं सेतुमध्ये स राघवः १९ लब्धवान् परमां भक्तिं शिवे शम्भोरनुग्रहात् । रामेश्वर इति ख्यातो महादेवः पिनाकधृक् २० तस्य दर्शनमात्रेण सर्वहत्यां व्यपो-

---

१ 'त्वं विष्णुः सर्व भूतानामनन्तो ज्ञानदृक्प्रभुः' इति 'क' पुस्तके।
२ प्रतिष्ठाप्येत्यतः पद्यद्वयं इति 'ग' पुस्तक एव।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

विह्वलाङ्गी रोमाञ्चसंस्वेदसकम्पगात्रा । कृताकुला कामशि-
लीमुखेन सगद्गदं वाक्यमुवाच मन्दम् ३४ कान्ता धनेशस्य
च यक्षकन्या प्राप्ता च गौरीचरणार्चनाय । प्रब्रूहि कार्यं च
तवास्ति नाथ कस्त्वं वद तिष्ठसि कामरूपः ३५

॥ इंद्रउवाच ॥

सा त्वं समागच्छ भजस्व मां चिराद् मदङ्ग संगोत्सुकतां
व्रजाशु । त्वया विना जीवितमप्यनल्पं स्वर्गस्य राज्यं मम निष्फलं
स्यात् ३६ उक्ता च सैवं मधुरं च तेन कन्दर्पसंतापितचारुदेहा ।
विमानमारुह्य चलत्पताकं सुरेशकण्ठग्रहणं चकार ३७ जगाम
शीघ्रं स हि नाकनाथः सार्कं तया मन्दरकन्दरासु ।
अदृष्टदेवासुरसंचरत्सु विचित्ररत्नांकुरभासुरासु ३८ रेमे
तया साकमुदारवीर्यश्चित्रं सुरैश्वर्यगतादरोपि । स्वयं च यस्या
लघुपुष्पशय्यां चकार चातुर्यनिधिः सकामः ३९ जातः कृता-
र्थोमरवृन्दनाथः सकामभोगेषु सदा विदग्धः । मोक्षाधिकं स्नेह-
रसातिमृष्टं पराङ्गनालिङ्गनसंगसौख्यम् ४० अथागता यक्ष-
पतेः समीपं नार्योनुवर्ज्यैव च चित्रसेनाम् । ससंभ्रमाः संभ्रम-
खिन्नगात्राः सगद्गदं प्रोचुरसाहसज्ञाः ४१ नूनं समाकर्ण्य
च यक्षनाथो विमानमारोप्य जगाम कश्चित् । संवीक्ष्यमाणः क-
कुभोपि कान्तां विगृह्य वेगादिह सोपि तस्करः ४२ वचो
निशम्याथ धनाधिनाथो विषोपमं जातमषीनिभाननः । जगाद
भूयो न च किंचिदेव बभूव वै वृक्षइवाग्निदग्धः ४३ विज्ञा-
पितार्थो वरकन्यकाभिः यश्चित्रसेनासहचारिणीभिः । मोहाप-
नोदाय मतिं दधानः स कण्ठकुब्जोऽपि[1] समाजगाम ४४ श्रुत्वागतं
वीक्ष्य सराजराज उन्मीलिताक्षो वचनं जगाद । विनिः श्वसन्
गाढसकम्पगात्रः स्वस्थं मनोप्याशु विधाय दीनः ४५ तद्यौवनं

१ ' स कण्ठकुद्धोपी ' ति ' ख ' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यद्युवतीविनोदो धनं तु चैतत् स्वजनोपयोगि। तज्जीवितं यत्क्रियते सुधर्मस्तदाधिपत्यं यदि दुष्टविग्रहः ४६ धिङ्मे धनं जीवितमत्यनल्पं राज्यं बृहत्संप्रति गुह्यकानाम्। विशामि चाग्निं न च वेद कश्चित् पराभवोस्तीति च को मृतानाम् ४७ पार्श्वेस्थितस्यापि च जीवतो मे गता तडागं गिरिजार्चनाय। हृता च केनापि वयं न विद्मो ध्रुवं न तस्यास्ति भयं च मृत्योः ४८ जगाद वाक्यं स च कण्ठकुब्जो मोहापनोदाय विभोः स मन्त्री। आकर्ण्य तां नाथ नचास्ति योग्यः कान्तावियोगे निजदेहघातः ४९ एका पुरा रामवधू हृता च निशाचरेणापि मृतो न सोपि। अनेकशः सन्ति तवात्र नार्यः को नाम चित्ते क्रियते विषादः ५० विमुच्य शोकं कुरु विक्रमे मतिं धैर्यं समालम्बय यक्षराज। भृशं न जल्पन्ति रुषन्ति साधवः पराभवं बाह्यकृतं सहन्ते ५१ कृतं हि कार्यं गुरु दर्शयन्ति सहायवान् वित्तप कातरोसि किम्। सहायकार्यं कुरुते हि संप्रति स्वयं हि यस्यावरजो विभीषणः ५२

॥ धनद उवाच ॥

विभीषणो मे प्रतिपक्षभूतो दायादभावं न विमुञ्चतीति। ध्रुवं प्रसन्ना न भवंति दुर्जनाः कृतोपकारा हरिवज्रनिष्ठुराः ५३ नचोपकारैर्न गुणैर्न सौहृदैः प्रसादमायाति मनो हि गोत्रिणः। उवाच वाक्यं स च कण्ठकुब्जो युक्तं त्वयोक्तं च धनाधिनाथ ५४ परस्परं घ्नन्ति च ते विरुद्धास्तथापि लोके न पराभवोस्ति पराभवं नान्यकृतं सहन्ते नोष्णं जलं ज्वालयते तृणानि ५५ तस्मात्समागच्छ धनाधिनाथ पार्श्वं च वेगेन विभीषणस्य। स्वबाहुवीर्यार्जितवित्तभोगिनां स्वबन्धुवर्गेषु हि को विरोधः ५६ इत्युक्तः स तदा तेन कण्ठकुब्जेन मन्त्रिणा। विभीषणस्य सामीप्यं जागामाशु विचारयन् ५७ ततो लङ्काधिपः श्रुत्वा

१ 'गृहाणि' इति पाठः 'ख' पुस्तके।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

बान्धवं पूर्वजं तदा । प्राप्तं प्रत्याजगामाशु विनयेन समन्वितः ५८ ततो विभीषणो दृष्ट्वा तदा दीनं च बान्धवम् । संतप्तमानसो भूप जगादेदं वचो महत् ५९

॥ विभीषण उवाच ॥

कथं दीनोसि यक्षेश किं कष्टं तव चेतसि ।
निवेदयाधुनास्माकं निश्चयान्मार्जयामि तत् ६०
तदैकान्तं समासाद्य कथयामास वेदनाम् ।

॥ धनद उवाच ॥

गृहीता किं स्वयं याता निहता केनचिद्द्विषा ६१
भ्रातः कान्तां न पश्यामि चित्रसेनां मनोरमाम् ।
एतद्बन्धो महत्कष्टं मम नारीसमुद्भवम् ६२
प्राणान्वै घातयिष्यामि अनासाद्य च वल्लभाम् ।

॥ विभीषण उवाच ॥

आनयिष्यामि ते कान्तां यत्र तत्र स्थितां विभो ६३ कः समर्थोधुनास्माकं हर्तुं नाथ तृणस्य च । ततो विभीषणस्तत्र नाडीजङ्घां निशाचरीम् ६४ भृशं संजल्पयामास नानामाया- गरीयसीम् । धनदस्य च या कान्ता चित्रसेनाभिधानतः ६५ सा च केन हृता लोके मानसे सरसि स्थितां । तां च जानीहि संवीक्ष्य देवराजादिवेश्मसु ६६ ततो निशाचरी भूप कृत्वा मायामयं वपुः । जगाम त्रिदिवं शीघ्रं देवराजादिवे- श्मसु ६७ यया दृष्ट्या क्षणं दृष्टो मोहं यास्यति चोपलः । यस्या समं ध्रुवं रूपं विद्यते न चराचरे ६८ एतस्मिन्नेव काले च देवराजोपि पुत्रक । संप्राप्तो मन्दराच्छीघ्रं प्रेरितश्चित्रसे- नया ६९ गृहीतुं दिव्यपुष्पाणि नन्दनप्रभवाणि च । तत्र पश्यत तां तन्वीं निजस्थाने समागताम् ७० अतीवरूपसम्पन्नां

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

गीतगानपरायणाम् । तां वीक्ष्य देवराजोपि स कामवशगोऽभवत् ७१ ततः संप्रेरयामास देववैद्यौ सुराधिपः । तस्याः पार्श्वे समानेतुं ध्रुवं चान्तःपुरे तदा ७२ देववैद्यौ तदागत्य जल्पतश्चाग्रतः स्थितौ । आगच्छ भद्र तन्वङ्गि देवराजसमीपगा ७३ इत्युक्ता सा तदा ताभ्यां जगाद मधुराक्षरम् ।

॥ नाडीजङ्घोवाच ॥

देवराजः स्वयं यन्मे पार्श्वे चात्रागमिष्यति ७४
तस्य वाच्यं च कर्तव्यं नान्यथा सर्वथा मया ।
तौ स्तदा वासवं गत्वा ऊचतुर्वचनं शुभम् ७५

॥ वासव उवाच ॥

समादेशय तन्वङ्गि किं कर्तव्यं मयाधुना ।
सर्वदा दासभूतस्ते याचसे तद्ददाम्यहम् ७६

॥ तन्वङ्ग्युवाच ॥

याचितं यदि मे नाथ दास्यसीति न संशयः । ततोहं वशगा देव भविष्यामि न संशयः ७७ अद्य त्वं दर्शयास्माकं सर्वः कान्तापरिग्रहः । मम रूपसमा रामा कान्ता ते चास्ति वा नवा ७८ तया चोक्ते च वचने स भूयो वासवोऽवदत् । दर्शयिष्यामि सर्वं ते देवि कान्तापरिग्रहम् ७९ स सर्वं दर्शयामास वासवोन्तःपुरं तदा । ततो जगाद भूयः सः किञ्चिद्गूढं मम स्थितम् ८० विमुच्यैकां च युवतीं सर्वं ते दर्शितं मया । सारामामन्दिरे चास्ति अविज्ञाता सुरासुरैः ८१ तां च ते दर्शयिष्यामि नाख्येयं कस्यचित्त्वया । ततः स देवराजोपि तया सार्द्धं च पुत्रक ८२ गच्छन्नेवाम्बरे भूप मन्दरं प्रति भूधरम् । तस्य वै गच्छमानस्य विमानेनार्कवर्चसा । दर्शनं नारदस्यापि तस्य जातं तदाम्बरे ८३ तं वीक्ष्य नारदं वीरो लज्जमानोपि वासवः ८४ नमस्कृत्य जगादोच्चैः क्व यास्यसि महामुने ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ततः कृताशीः स मुनिरवदत्त्रिदिवेश्वरम् ८५ गच्छामि मानसे स्नातुं देवराज सुखी भव । नाडीजङ्घेस्ति कुशलं राक्षसानां महात्मनाम् ८६ विभीषणोऽपि ते भ्राता सुखी तिष्ठति सर्वदा । एवमुक्ता च मुनिना सा कृष्णवदनाभवत् ८७ विस्मितो देवराजोपि छंब्रितो दुष्टयानया । नारदोपि गतः स्नातुं कैलासे मानसं सरः ८८ इन्द्रस्तां हन्तुकामोपि आगच्छन्मन्दराचलम् । तत्राश्रमोस्ति वै नूनं तृणबिन्दोर्महात्मनः। ८९ क्षणं विश्रम्य तत्रैव धृत्वा केशेषु राक्षसीम् । हन्तुमिच्छति देवेशो नाडीजङ्घां निशाचरीम् ९० तावत्तत्र समायातस्तृणबिन्दुर्निजाश्रमे । धृता क्रन्दति सा राजन्निन्द्रेणापि निशाचरी ९१ मा मां रक्षति पुण्यात्मा हन्यमानां च साम्प्रतम् । तदागत्य मुनिश्रेष्ठस्तृणबिन्दुर्महातपाः ९२ जगाद पुरतः स्थित्वा मुञ्चेमां महिलां वने । जल्पत्येवं मुनौ तस्मिन् महेन्द्रेण निशाचरी ९३ वज्रेण निहता वत्स कोपयुक्तेन चेतसा । स चुकोप मुनिश्रेष्ठः प्रेक्षमाणो मुहुर्मुहुः ९४ यदेषा युवती दुष्ट निहता मे तपोवने ततस्त्वं मम शापेन निश्चयात् स्त्री भविष्यसि ९५

॥ इंद्र उवाच ॥

एषा नाथ महादुष्टा राक्षसी निहता मया ।
अहं स्वामी सुराणां च शापं मा देहि मेधुना ९६

॥ मुनिरुवाच ॥

नूनं तपोवनेस्माकं दुष्टास्तिष्ठन्ति साधवः । ममात्र तपसो भावान्न निघ्नन्ति परस्परम् ९७ इत्युक्तो हि तदा चेन्द्रो प्राप्तः स्त्रीत्वं न संशयः । जगाम त्रिदिवं भूप हतशक्तिपराक्रमः ९८ नासीनो हि भवत्येव सर्वदा देवसंसदि । देवा दुःखं समापन्ना दृष्ट्वा स्त्रीत्वं गतं हरिम् । ततो देवगणाः सर्वे वासवेन

१ 'छलित' इति 'ग' पुस्तके ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

समन्विताः । जग्मुश्च ब्रह्मसदनं तथा दीना शची तदा १०० ब्रह्मा भग्नसमाधिश्च तावत्तत्रैव संस्थिताः । देवा ऊचुश्च ते सर्वे वासवेन समन्विताः १ तृणबिन्दोर्मुनेः शापाघातः स्त्रीत्वं सुराधिपः । स मुनिः कोपवान् ब्रह्मन् नैव गच्छत्यनुग्रहम् २

॥ पितामह उवाच ॥

न मुनेरपराधः स्यात्तृणबिन्दोर्महात्मनः । स कर्मणोपयातोऽसौ स्त्रीत्वं स्त्रीवधकारणात् ३ चकार दुर्नयं देवा देवराजोपि दुर्मदः । जहार चित्रसेनां च सुगुप्तां धनदाङ्गनाम् ४ तथा जघान युवतीं तृणबिन्दोस्तपोवने । तेन कर्मविपाकेन स्त्रीभावं वासवो गतः ५

॥ देवा ऊचुः ॥

यदसौ कृतवान् शम्भो दुर्नयं नाथदुर्मतिः । तत्सर्वं साधयिष्यामो वयं शच्या समन्विताः ६ कान्ता धनाधिनाथस्य गूढा तिष्ठति या विभो । तां च तस्मै प्रदास्यामः सर्वे कृत्वा परां मतिम् ७ त्रयोदश्यां चतुर्दश्यां देवराजः शचीयुतः । नन्दने चार्चनं कर्त्ता सर्वदा यक्षरक्षसाम् ८ ततः शची तदा गूढं चित्रसेनां विगृह्य च । मुमोच यक्षभुवनं प्रियकष्टानुवर्त्तिनीम् ९ एतस्मिन्नन्तरे दूतोऽकाले लङ्कां समागतः । धनेशं कथयामास चित्रसेनासमागमम् १० शच्या सार्कं समायाता तव कान्ता धनाधिप । सखीं स्वामतुलं प्राप्यचरितार्था बभूव सा ॥ धनेशोपि कृतार्थीभूज्जगाम निजवेश्मनि ।

॥ देवा ऊचुः ॥

सर्वमेतत्कृतं ब्रह्मन् प्रसादात्ते न संशयः १२
पतिहीना यथा नारी नाथहीनं यथाबलम् ।
गोकुलं कृष्णहीनं तु तथेन्द्रेणामरावती १३



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

जपक्रिया तपो दानं ज्ञानं तीर्थं च वै प्रभो ।
वासवस्य समाख्याहि यतः स्त्रीत्वाद्विमुच्यते १४

॥ ब्रह्मोवाच ॥

निहन्तुं च मुनेः शापं न समर्थोहं न शंकरः ।
तीर्थश्चान्यन्न पश्यामि मुक्त्वैकं विष्णुपूजनम् १५
अष्टाक्षरेण मन्त्रेण पूजनं च तथा जपः ।
करोतु विधिवच्छक्रः स्त्रीत्वाद्येन च मुच्यते १६
एकाग्रमनसा शक्र स्नात्वा श्रद्धासमन्वितः ।
ॐनमोनारायणायेति जप त्वमात्मशुद्धये १७
लक्षद्वये कृते जाप्ये स्त्रीभावान्मुच्यसे हरे ।
इति श्रुत्वा तथाकार्षीद्ब्रह्मोक्तं वचनं हरिः १८
स्त्रीभावाच्च विनिर्मुक्तस्तदा विष्णोः प्रसादतः ।

॥ मार्कण्डेय उवाच ॥

इति ते कथितं सर्वं विष्णुमाहात्म्यमुत्तमम् १९
मया भृगुनियुक्तेन कुरु सर्वमतन्द्रितः ।
" शृण्वन्ति ये विष्णुकथामकल्मषाः
वीर्यं हि विष्णोः खिलकारणस्य ॥
ते मुक्तपापाः परदारगामिनो
विशन्ति विष्णोः परमं पदं ध्रुवम् " २०

॥ सूत उवाच ॥

इति संबोधितस्तेन मार्कण्डेयेन पार्थिवः ।
नरसिंहं समाराध्य प्राप्नुयाद्वैष्णवं पदम् ॥
एतत्ते कथितं सर्वं भरद्वाज मुने मया २१
सहस्रानीकचरितं किमन्यत्कथयामि ते ।
कथामिमां यस्तु शृणोति मानवः पुरातनीं सर्वविमुक्तिदां च

---

१' ख ' पुस्तके एवेदं पद्यम् ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

संप्राप्य स ज्ञानमतीव निर्मलं तेनैव विष्णुं प्रतिपद्यते जनः २२ इति श्रीनरसिंहपुराणे सहस्रानीकचरितेऽष्टाक्षरमन्त्रकथनं नाम त्रिषष्टितमोऽध्यायः ॥६३॥

## चतुःषष्टितमोऽध्यायः ।

॥ श्रीभारद्वाज उवाच ॥

सत्यं केचित्प्रशंसन्ति तपः शौचं तथापरे । सांख्यं केचित्प्रशंसन्ति योगमन्ये प्रचक्षते १ ज्ञानं केचित्प्रशंसन्ति समलोष्टाश्मकाञ्चनाः । क्षमां केचित्प्रशंसन्ति तथैव च दयार्जवम् २ केचिद्दानं प्रशंसन्ति केचिदाहुः परं शुभम् । सम्यग्ज्ञानं परं केचित्केचिद्वैराग्यमुत्तमम् ३ अग्निष्टोमादिकर्माणि तथा केचित्परं विदुः । आत्मध्यानं परं केचित्सांख्यतत्त्वार्थवेदिनः ४ धर्मार्थकाममोक्षाणां चतुर्णामिह केवलम् । उपायः पादभेदेन बहुधैवं प्रचक्ष्यते ५ एवं चावस्थिते लोके कृत्याकृत्यविधौ नराः । व्यामोहमेव गच्छन्ति विमुक्ताः पापकर्मभिः ६ यदेतेषु परं कृत्यमनुष्ठेयं महात्मभिः । वक्तुमर्हसि सर्वज्ञ मम सर्वार्थसाधकम् ७

॥ सूत उवाच ॥

श्रूयतामिदमत्यन्तं गूढं संसारमोचनम् । अत्रैवोदाहरन्तीममितिहासं पुरातनम् ८ पुण्डरीकस्य संवादं देवर्षेर्नारदस्य च । ब्राह्मणः श्रुतसम्पन्नः पुण्डरीको महामतिः ९ आश्रमे प्रथमे तिष्ठन् गुरूणां वशगः सदा । जितेन्द्रियो जितक्रोधः सन्ध्योपासनधिष्ठितः १० वेदवेदाङ्गनिपुणः शास्त्रेषु च विचक्षणः । समिद्भिः साधुयत्नेन सायं प्रातर्हुताशनम् ११ ध्यात्वा यज्ञपतिं विष्णुं सम्यगाराधयन्विभुम् । तपःस्वाध्याय-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

निरतः साक्षाद्ब्रह्मसुतो यथा १२ उदकेन्धनपुष्पार्थैरसकृत्त-र्पयन् गुरून् । मातापितृभ्यां शुश्रूषुर्भिक्षाहारी जनप्रियः १३ ब्रह्मविद्यामधीयानः प्राणायामपरायणः । तस्य सर्वार्थभूतस्य संसारेऽत्यन्तनिस्पृहम् १४ बुद्धिरासीन्महाराज संसारार्णवता-रणी । पितरं मातरं चैव भ्रातॄनथ पितामहान् १५ पितृ-व्यान्मातुलांश्चैव सर्वान् सम्बन्धिबान्धवान् । परित्यज्य महो-दारस्तृणानीव यथासुखम् १६ विचचार महीमेतां शाक-मूलफलाशनः । अनित्यं यौवनं रूपमायुष्यं द्रव्यसंचयम् १७ इति संचिन्त्यमानेन त्रैलोक्यं लोष्टवत् स्मृतम् । पुराणोदितमा-र्गेण सर्वतीर्थानि वै मुने १८ गमिष्यामि यथाकालमिति निश्चितमानसः । गङ्गां च यमुनां चैव गोमतीमथ गण्डकीम् १९ शतद्रूं च पयोष्णीं च सरयूं च सरस्वतीम् । प्रयागं नर्मदां चैव महानद्यो नदानपि २० गयां च विन्ध्यतीर्था-नि हिमवत्प्रभवाणि च । अन्यानि च महातेजास्तीर्थानि स महाव्रतः २१ संचचार महाबाहुर्यथाकालं यथाविधि । कदाचित्प्राप्तवान्वीरः शालिग्रामं तपोधनः २२ पुण्डरीको महाभागः पुण्यकर्मवशानुगः । आसेव्यमानमृषिभिस्तत्त्वविद्भि-स्तपोधनैः २३ मुनीनामाश्रमं रम्यं पुराणेषु च विश्रुतम् । भूषितं चक्रनद्या च चक्राङ्कितशिलातलम् २४ रम्यं विविक्तं विस्तीर्णं सदाचित्तप्रसादकम् । केचिच्चक्रांकितास्तस्मिन् प्रा-णिनः पुण्यदर्शिनः २५ विचरन्ति यथाकामं पुण्यतीर्थप्रस-ङ्गिनः । तस्मिन् क्षेत्रे महापुण्ये शालिग्रामे महामतिः २६ पुण्ड-रीकः प्रसन्नात्मा तीर्थानि समसेवत । स्नात्वा देवह्रदे तीर्थे स-रस्वत्यां च सुव्रतः २७ जातिस्मर्यां चक्रकुण्डे चक्रनद्यास्तते-ष्वपि । तथान्यान्यपि तीर्थानि तस्मिन्नेव चचार सः २८ ततः क्षेत्रप्रभावेन तीर्थानां चैव तेजसा । मनः प्रसादमगमत्तस्य तस्मिन्महात्मनः २९ सोपि तीर्थे विशुद्धात्मा ध्यानयोगप-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रायणः । तत्रैव सिद्धिमाकांक्षन् समाराध्य जगत्पतिम् ३०
शास्त्रोक्तेन विधानेन भक्त्या परमया युतः । उवास चिरमेका-
की निर्द्वन्द्वः संयतेन्द्रियः ३१ शाकमूलफलाहारः संतुष्टः
समदर्शनः । यमैश्च नियमैश्चैव तथा चासनबन्धनैः ३२ प्राणाया-
मैः सुतीक्ष्णैश्च प्रत्याहारैश्च संततैः । धारणाभिस्तथा ध्यानैः
समाधिभिरतन्द्रितः ३३ योगाभ्यासं तदा सम्यक् चक्रे
विगतकल्मषः । आराध्य देवदेवेशं तद्गतेनान्तरात्मना ३४
पुण्डरीको महाभागः पुरुषार्थविशारदः । प्रसादं परमाकांक्षन्
विष्णोस्तद्गतमानसः ३५ तस्य तस्मिन्निवसतः शालिग्रामे
महात्मनः । पुण्डरीकस्य राजेन्द्र कालोऽगच्छन्महांस्ततः ३६
मुने कदाचित्तं देशं नारदः परमार्थवित् । जगाम सुमहातेजाः
साक्षादादित्यसन्निभः ३७ तं द्रष्टुकामो देवर्षिः पुण्डरीकं
तपोनिधिम् । विष्णुभक्तिपरीतात्मा वैष्णवानां हिते रतः ३८
स दृष्ट्वा नारदं प्राप्तं सर्वतेजःप्रभान्वितम् । महामतिं महाप्राज्ञं
सर्वागमविशारदम् ३९ प्राञ्जलिः प्रणतो भूत्वा प्रहृष्टेनान्त-
रात्मना । अर्घं दत्त्वा यथायोग्यं प्रणाममकरोत्ततः ४०
कोयमत्यद्भुताकारस्तेजस्वी हृद्यवेषधृक् । अतोग्रहस्तः सुमुखो
जटामण्डलभूषणः ४१ विवस्वानथ वा वह्निरिन्द्रो वरुण
एव वा । इति सञ्चिन्तयन्विप्रः पप्रच्छ परमद्युतिः ४२

॥ पुण्डरीक उवाच ॥

को भवानिह सम्प्राप्तः कुतो वा परमद्युते ।
त्वद्दर्शनं ह्यपुण्यानां प्रायेण भुवि दुर्लभम् ४३

॥ नारद उवाच ॥

नारदोहमनुप्राप्तस्त्वद्दर्शनकुतूहलात् ।
पुण्डरीक हरेर्भक्तस्त्वादृशः सततं द्विजः ४४
स्मृतः सम्भाषितो वापि पूजितो वा द्विजोत्तमः ।
पुनाति भगवद्भक्तश्चाण्डालोपि यदृच्छया ४५

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

दासोहं वासुदेवस्य देवदेवस्य शार्ङ्गिणः ।
इत्युक्तो नारदेनासौ भक्तिपर्याकुलात्मना ४६
प्रोवाच मधुरं विप्रस्तद्दर्शनसुविस्मितः ।

॥ पुण्डरीक उवाच ॥

धन्योहं देहिनामद्य सुपूज्योऽहं सुरैरपि ४७
कृतार्थाः पितरो मेद्य सम्प्राप्तं जन्मनः फलम् ।
अनुगृह्णीष्व देवर्षे त्वद्भक्तस्य विशेषतः ४८
किं किं करोम्यहं विद्वन् भ्राम्यमाणः स्वकर्मभिः ।
कर्तव्यं परमं गुह्यमुपदेष्टुं त्वमर्हसि ४९
त्वं गतिः सर्वलोकेषु वैष्णवानां विशेषतः ।

॥ नारद उवाच ॥

अनेकानीह शास्त्राणि कर्माणि च तथा द्विज ५०
धर्ममार्गाश्च बहवस्तथैव प्राणिनः स्मृताः ।
वैलक्षण्यं च जगतस्तस्मादेव द्विजोत्तम ५१
अव्यक्ताज्जायते सर्वं सर्वात्मकमिदं जगत् ।
इत्येवं प्राहुरपरे तत्रैव लयमेव च ५२
आत्मानो बहवः प्रोक्ता नित्याः सर्वगतास्तथा ।
अन्यैर्मतिमतां श्रेष्ठ तत्त्वालोकनतत्परैः ५३
एवमाद्यनुसश्चिन्त्य यथामति यथाश्रुतम् ।
वदन्ति ऋषयः सर्वे नानामतविशारदाः ५४

शृणुष्वावहितो ब्रह्मन् कथयामि तवानघ । परमार्थमिदं गुह्यं घोरसंसारमोचनम् ५५ अनागतमतीतं च विप्रकृष्टमतीव यत् । न गृण्हाति नृणां दृष्टिर्वर्तमानार्थनिश्चिता ५६ शृणुष्वावहितं तात कथयामि तवानघ । यत्प्रोक्तं ब्रह्मणा पूर्वं पृच्छतो मम सुव्रत ५७ कदाचिद्ब्रह्मलोकस्थं पद्मयोनिं पितामहम् । प्रणिपत्य यथान्यायं पृष्टवानहमव्ययम् ५८

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ नारद उवाच ॥

किं तत् ज्ञानं परं देव कश्च योगः परस्तथा ।
एतन्मे तत्त्वतः सर्वं त्वमाचक्ष्व पितामह ५९

॥ ब्रह्मोवाच ॥

यः परः प्रकृतेः प्रोक्तः पुरुषः पञ्चविंशकः । स एव सर्वभूतानां नर इत्यभिधीयते ६० नराज्जातानि तत्त्वानि नाराणीति ततो विदुः । तान्येव चायनं तस्य तेन नारायणः स्मृतः ६१ नारायणाज्जगत्सर्वं सर्गकाले प्रजायते । तस्मिन्नेव पुनस्तच्च प्रलये सम्प्रलीयते ६२ नारायणः परं ब्रह्म तत्त्वं नारायणः परं । नारायणः परं ज्योतिरात्मा नारायणःपरः ६३ परादपि परश्चासौ तस्मान्नातिपरं मुने । यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेपि वा ६४ अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः । एवं विदित्वा तं देवाः साकारं व्याहरन्मुहुः ६५ नमो नारायणायेति ध्यात्वा चानन्यमानसाः । किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः ६६ यो नित्यं ध्यायते देवं नारायणमनन्यधीः । । एतज् ज्ञानं वरं नातो योगश्चैव परस्तथा ६७ परस्परविरुद्धार्थैः किमन्यैः शास्त्रविस्तरैः । बहवोऽपि यथामार्गा विशंत्येकं महत्पुरम् ६८ तथा ज्ञानानि सर्वाणि प्रविशन्ति तमीश्वरम् । स हि सर्वगतो देवः सूक्ष्मोव्यक्तः सनातनः ६९ जगदादिरनाद्यन्तः स्वयम्भूर्भूतभावनः । विष्णुर्विभुरचिन्त्यात्मा नित्यः सदसदात्मकः ७० वासुदेवो जगद्वासः पुराणः कविरव्ययः । यस्मात्प्राप्तं स्थितिं कृत्स्नं त्रैलोक्यं सचराचरम् ७१ तस्मात्स भगवान् देवो विष्णुरित्यभिधीयते। यस्माद्वा सर्वभूतानां तत्त्वाद्यानां युगक्षये। ७२ तस्मिन्निवासः संसर्गे वासुदेवस्ततस्तु सः । तमाहुः पुरुषं केचित् केचिदीश्वरमव्ययम् ७३ विज्ञानमात्रं किञ्चिच

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

केचिद्ब्रह्म परं तथा । केचित्कालमनाद्यन्तं केचिज्जीवं सनातनम् । केचिच्च परमात्मानं केचिच्चैवमनामयम् । केचित्क्षेत्रज्ञमित्याहुः केचित्षड्विंशकं तथा ७४ अंगुष्ठमात्रं केचिच्च केचित्पद्मरजोपमम् । एते चान्ये च मुनिभिः संज्ञाभेदाः पृथग्विधाः ७५ शास्त्रेषु कथिता विष्णोर्लोकव्यामोहकारकाः । एकं यदि भवेच्छास्त्रं ज्ञानं निःसंशयं भवेत् ७६ बहुत्वादिह शास्त्राणां ज्ञानतत्त्वं सुदुर्लभम् । आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः ७७ इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा । त्यक्त्वा व्यामोहकान् सर्वान् तस्माच्छास्त्रार्थविस्तरान् ७८ अनन्यचेता ध्यायस्व नारायणमतन्द्रितः । एवं ज्ञात्वा तु सततं देवदेवं तमव्ययम् ७९ क्षिप्रं यास्यसि तत्रैव सायुज्यं नात्र संशयः । श्रुत्वेदं ब्रह्मणा प्रोक्तं ज्ञानयोगं सुदुर्लभम् ८० ततोऽहमासं विप्रेन्द्र नारायणपरायणः । नमोनारायणायेति ये विदुर्ब्रह्म शाश्वतम् ८१ अन्तकाले जपन्नेति तद्विष्णोः परमं पदम् । तस्मान्नारायणस्तात परमात्मा सनातनः ८२ अनन्यमनसा नित्यं ध्यायेत्तत्त्वविचिन्तकः । नारायणो जगद्व्यापी परमात्मा सनातनः ८३ जगतां सृष्टिसंहारपरिपालनतत्परः । श्रवणात्पठनाच्चैव निदिध्यासनतत्परः ८४ आराध्यं सर्वथा ब्रह्मन् पुरुषेण हितैषिणा । निःस्पृहा नित्यसंतुष्टा ज्ञानिनः संयतेन्द्रियाः ८५ निर्ममा निरहङ्कारा रागद्वेषविवर्जिताः । अपक्षपतिताः शान्ताः सर्वसङ्कल्पवर्जिताः ८६ ध्यानयोगपरा ब्रह्मन् ते पश्यन्ति जगत्पतिम् । त्यक्तत्रया महात्मानो वासुदेवं हरिं गुरुम् ८७ कीर्तयन्ति जगन्नाथं ते पश्यन्ति जगत्पतिम् । तस्मात्त्वमपि विप्रेन्द्र नारायणपरो भव ८८ तदन्यः को महोदारः प्रार्थितं दातुमीश्वरः । हेलया कीर्त्तितो यो वै स्वं पदं विशति द्विजः ८९ अपि कार्यं त्वया चैव जपः स्वाध्यायमेव च । तमेवोद्दिश्य देवेशं कुरु नित्यमतन्द्रितः ९०

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

किं तत्र बहुभिर्मन्त्रैः किं तत्र बहुभिर्व्रतैः । नमोनारायणायेति मन्त्रः सर्वार्थसाधकः ९१ चीरवासा जटाधारी त्रिदण्डी मुण्ड एव वा । भूषितो वा द्विजश्रेष्ठ न लिङ्गं धर्मकारणम् ९२ ये नृशंसा दुरात्मानः पापाचाररताः सदा । तेऽपि यान्ति परं स्थानं नरा नारायणाश्रयाः ९३ जन्मान्तरसहस्रेषु यस्य स्याद्बुद्धिरीदृशी । दासोऽहं वासुदेवस्य देवदेवस्य शार्ङ्गिणः ९४ प्रयाति विष्णुसालोक्यं पुरुषो नात्र संशयः । किं पुनस्तद्गतप्राणः पुरुषः संयतेन्द्रियः ९५

॥ सूत उवाच ॥

इत्युक्त्वा देवदेवर्षिस्तत्रैवान्तरधीयत ९६परोपकारनिरतस्त्रैलोक्यस्यैकभूषणः ९७ पुण्डरीकोपि धर्मात्मा नारायणपरायणः । नमोस्तु केशवायेति पुनःपुनरुदीरयन् ९८ प्रसीदस्व महायोगिन्निदमुच्चार्य सर्वदा । हृत्पुण्डरीके गोविन्दं प्रतिष्ठाप्य जनार्दनम् ९९ तपःसिद्धिकरेऽरण्ये शालिग्रामे तपोधनः । उवास चिरमेकाकी पुरुषार्थविचक्षणः १०० स्वप्नेपि केशवादन्यन्न पश्यति महातपाः । निद्रापि तस्य नैवासीत्पुरुषार्थविरोधिनी १ तपसा ब्रह्मचर्येण शौचेन च विशेषतः । जन्मजन्मान्तरारूढसंस्कारेण च स द्विजः २ प्रसादाद्देवदेवस्य सर्वलोकैकसाक्षिणः । अवाप परमां सिद्धिं वैष्णवीं वीतकल्मषः ३ सिंहव्याघ्रास्तथान्येऽपि मृगाः प्राणिविहिंसकाः । विरोधं सहजं हित्वा समेतास्तस्य सन्निधौ ४ निवसन्ति द्विजश्रेष्ठ प्रशान्तेन्द्रियवृत्तयः । ततः कदाचिद्भगवान् पुण्डरीकस्य धीमतः ५ प्रादुरासीज्जगन्नाथः पुण्डरीकायतेक्षणः । शंखचक्रगदापाणिः पीतवासाः स्रगुज्ज्वलः ६ श्रीवत्सवक्षाः श्रीवासः कौस्तुभेन विभूषितः । आरुह्य गरुडं श्रीमानञ्जनाचलसन्निभः ७ मेरुशृङ्गमिवारूढः कालमेघस्तडिद्द्युतिः । राजतेनातपत्रेण मुक्तादामविलम्बिना ८ विराजमानो देवेशश्चामरव्यजना-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

दिभिः । तं दृष्ट्वा देवदेवेशं पुण्डरीकः कृताञ्जलिः ९ पपात शिरसा भूमौ साध्वसावनतो द्विजः । पिबन्निव हृषीकेशं नयनाभ्यां समाकुलः १० जगाम महतीं तृप्तिं पुण्डरीकस्तदाऽनघ । तमेवालोकयन्वीरश्चिरप्रार्थितदर्शनः ११ ततस्तमाह भगवान् पद्मनाभस्त्रिविक्रमः । प्रीतोऽस्मि वत्स भद्रं ते पुण्डरीक महामते १२ वरं वृणीष्व दास्यामि यत्ते मनसि वर्तते ।

॥ सूत उवाच ॥

एतच्छ्रुत्वा तु वचनं देवदेवेन भाषितम् १३
इदं विज्ञापयामास पुण्डरीको महामतिः ।

॥ पुण्डरीक उवाच

क्वाहमत्यन्तदुर्बुद्धिः क्व चात्महितवीक्षणम् १४
यद्धितं मम देवेश तदाज्ञापय माधव ।
एवमुक्तोऽथ भगवान् सुप्रीतः पुनरब्रवीत् १५
पुण्डरीकं महाभागं कृताञ्जलिमुपस्थितम् ।

॥ श्री भगवानुवाच ॥

आगच्छ कुशलं तेऽस्तु मयैव सह सुव्रत १६
मद्रूपधारी नित्यात्मा ममैव पार्षदो भव ।

॥ सूत उवाच ॥

एवमुक्तवति प्रीत्या श्रीधरे भक्तवत्सले १७ देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात च । देवाः सेन्द्रास्तथा सिद्धाः साधुसाध्वित्यथाब्रुवन् १८ जगुश्च सिद्धगन्धर्वाः किन्नराश्च विशेषतः । अथैनं समुपादाय वासुदेवो जगत्पतिः १९ जगाम गरुडारूढः सर्वदेवनमस्कृतः । तस्मात्त्वमपि विप्रेन्द्र विष्णुभक्तिसमन्वितः २० तच्चित्तस्तद्गतप्राणस्तद्भक्तानां हिते रतः । अर्चयित्वा यथायोगं भजस्व पुरुषोत्तमम् २१ शृणुष्व तत्कथाः पुण्याः सर्वपापप्रणाशिनीः । येनोपायेन राजेन्द्र विष्णुः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सर्वेश्वरेश्वरः २२ प्रीतो भवति विश्वात्मा तत्कुरुष्व सुविस्तरम् । अश्वमेधसहस्रेण वाजपेयशतैरपि । नाप्नुवन्ति गतिं पुण्यां नारायणपराङ्मुखाः २३ अजरममरमेकं ध्येयमाद्यन्तशून्यं सगुणविगुणमाद्यं स्थूलमत्यन्तसूक्ष्मम् । निरुपममुपमेयं योगिनां ज्ञानगम्यं त्रिभुवनगुरुमीशं त्वां प्रपन्नोस्मि विष्णो १२४ ॥ ॥ इति श्रीनरसिंहपुराणे पुण्डरीकनारदसंवादे चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

## पञ्चषष्टितमोऽध्यायः ।

॥ भारद्वाज उवाच ॥

त्वत्तो हि श्रोतुमिच्छामि गुह्यक्षेत्राणि वै हरेः ।
नामानि च सुगुह्यानि वद पापहराणि च १

॥ सूत उवाच ॥

मन्दरस्थं हरिं देवं ब्रह्मा पृच्छति केशवम्
भगवन्तं देवदेवं शंखचक्रगदाधरम् २

॥ ब्रह्मोवाच ॥

केषु केषु च क्षेत्रेषु द्रष्टव्योसि मया हरे ।
भक्तैरन्यैः सुरश्रेष्ठ मुक्तिकामैर्विशेषतः ३
यानि ते गुह्यनामानि क्षेत्राणि च जगत्पते ।
तान्यहं श्रोतुमिच्छामि त्वत्तः पद्मायतेक्षण ४
किं जपन्सुगतिं याति नरो नित्यमतन्द्रितः ।
त्वद्भक्तानां हितार्थाय तन्मे वद सुरेश्वर ५

---

१ 'एतच्छ्लोकार्धं 'क' पुस्तके न विद्यते । २ इतश्चाध्यायद्वितयं 'क ख' पुस्तकयोर्न ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

॥ श्रीभगवानुवाच ॥

शृणुष्वावहितो ब्रह्मन् गुह्यनामानि मेऽधुना । क्षेत्राणि चैव गुह्यानि तव वक्ष्यामि तत्त्वतः ६ कोकामुखे तु वाराहं मन्दरे मधुसूदनम् । अनन्तं कपिलद्वीपे प्रभासे रविनन्दनम् ७ माल्योदपानो वैकुण्ठं महेन्द्रे तु नृपात्मजम् । ऋषभे तु महाविष्णुं द्वारकायां तु भूपतिम् ८ पाण्डुसह्ये तु देवेशं वसुरूढे जगत्पतिम् । वल्लीवटे महायोगं चित्रकूटे नराधिपम् ९ निमिषे पीतवासं च गवां निष्क्रमणे हरिम् । शालग्रामे तपोवासमचिन्त्यं गन्धमादने १० कुब्जागारे हृषीकेशं गन्धद्वारे पयोधरम् । गरुडध्वजं तु सकले गोविन्दं नाम सायके ॥ ११ वृन्दावने तु गोपालं मथुरायां स्वयम्भुवम् । केदारे माधवं विन्द्याद्वाराणस्यां तु केशवम् १२ पुष्करे पुष्कराक्षं तु धृष्टद्युम्ने जयध्वजम् । तृणबिन्दुवने वीरमशोकं सिन्धुसागरे १३ कसेरटे महाबाहुममृतं तैजसे वने । विश्वासयूपे विश्वेशं नरसिंहं महावने १४ हलाङ्गरे रिपुहरं देवशालां त्रिविक्रमम् । पुरुषोत्तमं दशपुरे कुब्जके वामनं विदुः १५ विद्याधरं वितस्तायां वाराहे धरणीधरम् । देवदारुवने गुह्यं कावेर्यां नागशायिनम् १६ प्रयागे योगमूर्तिं च पयोष्ण्यां च सुदर्शनम् । कुमारतीर्थे कौमारं लोहिते हयशीर्षकम् १७ उज्जयिन्यां त्रिविक्रमं लिङ्गकूटे चतुर्भुजम् । हरिहरं तु भद्रायां दृष्ट्वा पापात्प्रमुच्यते १८ विश्वरूपं कुरुक्षेत्रे मणिकुण्डे हलायुधम् । लोकनाथमयोध्यायां कुण्डिने कुण्डिनेश्वरम् १९ भाण्डारे वासुदेवं तु चक्रतीर्थे सुदर्शनम् । आढ्ये विष्णुपदं विद्याच्छूकरे शूकरं विदुः २० ब्रह्मेशं मानसे तीर्थे दण्डके श्यामलं विदुः । त्रिकूटे नागमोक्षं च मेरुपृष्ठे च भास्करम् २१ विरजं पुष्पभद्रायां बालं केरलके विदुः । यशस्करं विपाशायां माहिष्मत्यां हुताशनम् २२

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

क्षीराब्धौ पद्मनाभं तु विमले तु सनातनम् । शिवनद्यां शिवकरं गयायां च गदाधरम् २३ सर्वत्र परमात्मानं यः पश्यति स मुच्यते । अष्टषष्टिच नामानि कथितानि मया तव २४ क्षेत्राणि चैव गुह्यानि कथितानि विशेषतः । एतानि मम नामानि रहस्यानि प्रजापते २५ यः पठेत् प्रातरुत्थाय शृणुयाद्वापि नित्यशः । गवां शतसहस्रस्य दत्तस्य फलमाप्नुयात् २६ दिनेदिने शुचिर्भूत्वा नामान्येतानि यः पठेत् । दुःस्वप्नं न भवेत्तस्य मत्प्रसादान्न संशयः २७ अष्टषष्टि तु नामानि त्रिकालं यः पठेन्नरः । विमुक्तः सर्वपापेभ्यो मम लोके स मोदते २८ द्रष्टव्यानि यथाशक्त्या क्षेत्रान्येतानि मानवैः । वैष्णवैस्तु विशेषेण तेषां मुक्तिं ददाम्यहम् २९,

॥ सूत उवाच ॥

हरिं समभ्यर्च्य तदग्रसंस्थितो ।
हरिं स्मरन्विष्णुदिने विशेषतः ३०
इमं स्तवं यः पठते स मानवः।
प्राप्नोति विष्णोरमृतात्मकं पदम् ३१

इति श्रीनरसिंहपुराणे आद्ये धर्मार्थमोक्षदायिनि विष्णुवल्लभे पञ्चषष्टितमोऽध्यायः ६५

---

## षट्षष्टितमोऽध्यायः ।

---

॥ सूत उवाच ॥

[1]उत्पन्नस्य स्तवं ब्रह्मन्हरेरेभिश्च नामभिः । पुनरन्यानि नामानि यानि तानि निबोध मे १ गङ्गा तु प्रथमं पुण्या यमुना

---

१ अयमध्यायः 'क ख' पुस्तकयोर्न इति कथितमायमेव ।



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

गोमती पुनः । सरयूः सरस्वती च चन्द्रभागा चर्मण्वती ॥ २ कुरुक्षेत्रं गया चैव पुष्कराणि तथार्बुदम् । नर्मदा च महापुण्या तीर्थान्येतानि चोत्तरे ३ वापी पयोष्णी पुण्ये द्वे तत्संगात्तीर्थमुत्तमम् । तथा ब्रह्ममतीनां च मेखलाभिः समन्विताः ४ विरजं च तथातीर्थं सर्वपापक्षयंकरम् । गोदावरी महापुण्या सर्वत्र द्विजसत्तमाः ५ तुङ्गभद्रा महापुण्या यत्राहं कमलोद्भव । हरेण सार्द्धं प्रीत्या तु वसामि मुनिपूजितः ६ दक्षिणा गङ्गा कृष्णा तु कावेरी च विशेषतः । सह्ये त्वामलक ग्रामे स्थितोऽहं कमलोद्भव ७ देवदेवस्य नाम्ना तु त्वया ब्रह्मन्सदार्चितः । तत्र तीर्थान्यनेकानि सर्वपापहराणि वै ॥ तेषु स्नात्वा च पीत्वा च पापान्मुच्यति मानवः ८ इत्येवं कथयित्वा तु तीर्थानि मधुसूदनः । ब्रह्मणे गतवान्ब्रह्मन्ब्रह्मापि स्वपुरं गतः ९

॥ भारद्वाज उवाच ॥

तस्मिन्नामलकग्रामे पुण्यतीर्थानि यानि वै ।
तानि मे वद धर्मज्ञ विस्तरेण यथार्थतः १०
क्षेत्रोत्पत्तिं च माहात्म्यं यात्रापर्व च यत्र तत् ।
तत्रासौ देवदेवेशः पूज्यते ब्रह्मणा स्वयम् ११

॥ सूत उवाच ॥

शृणु विप्र प्रवक्ष्यामि पुण्यं पापप्रणाशनम् । सह्यामलकतीर्थस्य उत्पत्त्यादि महामुने १२ पुरा सह्यवनोद्देशेतरुरामलको महान् । आसीद्ब्रह्मन्महोग्रोयं नाम्नायं चोच्यते बुधैः ॥ १३ फलानि तस्य वृक्षस्य महान्ति सुरसानि च । दर्शनीयानि दिव्यानि दुर्लभानि महामुने १४ परेषां ब्राह्मणानां तु परेण ब्रह्मणा पुरा । स दृष्टास्तु महावृक्षो महाफलसम-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

न्वितः १५ किमेतदिति विप्रेन्द्र ध्यानदृष्टिपरोऽभवत् ॥ ध्यानेन दृष्टवांस्तत्र पुनरामलकं तरुम् १६ तस्योपरि तु देवेशं शंखचक्रगदाधरम् । उत्थाय च पुनः पश्यत्प्रतिमामेव केवलाम् १७ तत्पादं भूतले देवः प्रविवेश महातरुम् । ततस्त्वा राधयामास देवदेवेशमव्ययम् १८ गन्धपुष्पादिभिर्नित्यं ब्रह्मा लोकपितामहः । द्वादशभिः सप्तभिस्तु संख्याभिः पूजितो हरिः १९ तस्मिन् क्षेत्रे मुनिश्रेष्ठ माहात्म्यं तस्य को वदेत् । श्रीसह्यामलकग्रामे देवदेवेशमव्ययम् २० आराध्य तीर्थे सम्प्राप्ता द्वादशप्रतिचतुर्मुखम् । तस्य पादतले तीर्थं निःसृतं पश्चिमामुखम् २१ तच्चक्रतीर्थमभवत्पुण्यं पापप्रणाशनम् । चक्रतीर्थे नरः स्नात्वा सर्वपापैः प्रमुच्यते २२ बहुवर्षसहस्राणि ब्रह्मलोके महीयते । शंखतीर्थे नरः स्नात्वा वाजपेयफलं लभेत् २३ पौषे मासे तु पुष्यार्के तद्यात्रादिवसे मुने । ब्रह्मणः कुण्डिका पूर्वं गङ्गातोयप्रपूरिता २४ तस्याद्रौ पतिता ब्रह्मंस्तत्रतीर्थेऽशुभं हरेत् । नाम्ना तत्कुण्डिकातीर्थं शिलागृहसमन्वितम् २५ तत्तीर्थे मनुजस्नात्वा तदानीं सिद्धिमाप्नुयात् । त्रिरात्रोपोषितो भूत्वा यस्तत्र स्नाति मानवः २६ सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते । कुण्डिकातीर्थादुत्तरे पिण्डाख्यानाच्च दक्षिणे २७ ऋणमोचनतीर्थं हि तीर्थानां गुह्यमुत्तमम् । त्रिरात्रमुषितो यस्तु तत्र स्नानं समाचरेत् २८ ऋणैस्त्रिभिरसौ ब्रह्मन्मुच्यते नात्र संशयः । श्राद्धं कृत्वा पितृभ्यश्चपिण्डस्थानेषु यो नरः २९ पितॄनुद्दिश्य विधिवत्पिण्डान्निर्वापयिष्यति । सुतृप्ताः पितरो यान्ति पितृलोकं न संशयः ३० पञ्चरात्रोषितस्नायी तीर्थे वै पापमोचने । सर्वपापक्षयं प्राप्य विष्णुलोके स मोदते ३१ तत्रैव महतीं धारां शिरसा यस्तु धारयेत् । सर्वक्रतुफलं प्राप्य नाकपृष्ठे महीयते ॥ ३२ धनुःपाते महातीर्थे भक्त्या यः स्नानमाचरेत् । आयुर्योगफलं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

प्राप्य स्वर्गलोके महीयते ३३ शरबिन्दौ नरः स्नात्वा शत-
क्रतुपुरं व्रजेत् । वाराहतीर्थे विप्रेन्द्र सह्ये यः स्नानमाचरेत्
३४ अहोरात्रोषितो भूत्वा विष्णुलोके महीयते । आकाश-
गङ्गानाम्ना च सह्याग्रे तीर्थमुत्तमम् ३५ शिलातलात्ततो
ब्रह्मन्निर्गता श्वेतमृत्तिका । तस्यां भक्त्या तु यः स्नाति नरो
द्विजवरोत्तम ३६ सर्वक्रतुफलं प्राप्य विष्णुलोके महीयते ।
ब्रह्मन्नमलसह्याद्रेर्यद्यत्तोयविनिर्गमम् ३७ तत्र तीर्थं विजा-
नीहि स्नात्वा पापात्प्रमुच्यते । सह्याद्रिं गतवान्नित्यं स्नात्वा
पापात्प्रमुच्यते ३८ एतेषु तीर्थेषु नरो नरेन्द्रं पुण्येषु सह्याद्रि-
समुद्भवेषु । दत्वा सुपुष्पाणि हरिं स भक्त्या विहाय पापं
प्रविशेत्स विष्णुम् ३९ सकृत्तीर्थादितोयेषु गङ्गायां तु पुनः
पुनः । सर्वतीर्थमयी गङ्गा सर्वदेवमयो हरिः ४० सर्वशास्त्रमयी
गीता सर्वधर्मो दयापरः । एवं ते कथितं विप्र क्षेत्रमाहात्म्यमु-
त्तमम् ४१ श्रीसह्यामलकग्रामे तीर्थे स्नात्वा फलानि च ।
तीर्थानामपि यत्तीर्थं तत्तीर्थं द्विजसत्तम । देवदेवस्य पा-
दस्य तलाद्भुवि विनिःसृतम् ४२ अम्भोयुगं तुरगमेधसहस्र
तुल्यं तच्चक्रतीर्थमिति वेदविदो वदन्ति ४३ स्नानाच्च तत्र
मनुजा न पुनर्भवन्ति पादौ प्रणम्य शिरसा मधुसूदन-
स्य ४४ गङ्गाप्रयागगमनैमिषपुष्कराणि पुण्यायनानि कुरु-
जाङ्गलयामुनानि । कालेन तीर्थसलिलानि पुनन्ति पापा-
त्पादोदकं भगवतस्तु पुनाति सद्यः ४५ ॥ ॥ इति
श्रीनरसिंहपुराणे तीर्थप्रशंसायां षट्षष्टितमोऽध्यायः ६६

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

## सप्तषष्टितमोऽध्यायः ।

॥ सूत उवाच ॥

तीर्थानि कथितान्येवं भौमानि द्विजसत्तम । मानसानि हि तीर्थानि फलदानि विशेषतः १ मनोनिर्मलता तीर्थं रागादिभिरनाकुलम् । सत्यं तीर्थं दया तीर्थं तीर्थमिन्द्रियनिग्रहः २ गुरुशुश्रूषणं तीर्थं मातृशुश्रूषणं तथा । स्वधर्माचरणं तीर्थं तीर्थमग्नेरुपासनम् ३ एतानि पुण्यतीर्थानि व्रतानि शृणु मेऽधुना । एकभक्तं तथा नक्तमुपवासं च वै मुने ४ पूर्णमास्याममावास्यामेकभक्तं समाचरेत् । तत्रैकभक्तं कुर्वाणः पुण्यां गतिमवाप्नुयात् ५ चतुर्थ्यां तु चतुर्दश्यां सप्तम्यां नक्तमाचरेत् । अष्टम्यां तु त्रयोदश्यां स प्राप्नोत्यभिवाञ्छितम् ६ उपवासो मुनिश्रेष्ठ एकादश्यां विधीयते । नरसिंहं समभ्यर्च्य सर्वपापैः प्रमुच्यते ७ हस्तयुक्तेऽर्कदिवसे सौरनक्तं समाचरेत् । स्नात्वार्कमध्ये विष्णुं च ध्यात्वा रोगात्प्रमुच्यते ८ आत्मनो द्विगुणां छायां यदा सन्तिष्ठते रविः । सौरनक्तं विजानीयान्न नक्तं निशिभोजनम् ९ गुरुवारे त्रयोदश्यामपराह्णे जले ततः । तर्पयित्वा पितॄन्देवानृषींश्च तिलतन्दुलैः १० नरसिंहं समभ्यर्च्य यः करोत्युपवासकम् । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ११ यदागस्त्योदये प्राप्ते तदा सप्तसु रात्रिषु । अर्घं दद्यात्समभ्यर्च्य अगस्त्याय महामुने १२ शंखे तोयं विनिक्षिप्य शितपुष्पाक्षतैर्युतम् । मन्त्रेणानेन वै दद्याच्छित पुष्पादिनार्चितम् १३ काशपुष्पप्रतीकाश अग्निमारुतसम्भव ।

---

१ अयमध्यायो 'ग' पुस्तके एव ।

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते १४ आतापी भक्षितो येन वातापी च महासुरः । समुद्रः शोषितो येन सोऽगस्त्यः प्रीयतां मम १५ एवं तु दद्याद्योऽर्घमगस्त्ये वै दिशं प्रति सर्वपापविनिर्मुक्तस्तमस्तरति दुस्तरम् १६ एवं ते कथितं सर्वं भारद्वाज महामुने । पुराणं नारसिंहं च मुनीनां सन्निधौ मया १७ सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च वंशानुचरितं चैव सर्वमेव प्रकीर्त्तितम् १८ ब्रह्मणैव पुरा प्रोक्तं मरीच्यादिषु वै मुने । तेभ्यश्च भृगुणा प्रोक्तं मार्कण्डेयेन वै ततः १९ मार्कण्डेयेन वै प्रोक्तं राज्ञो नागकुलस्य ह । प्रसादान्नरसिंहस्य प्राप्तं व्यासेन धीमता २० तत्प्रसादान्मया प्राप्तं सर्वपापप्रणाशनम् । पुराणं नरसिंहस्य मया च कथितं तव २१ मुनीनां सन्निधौ पुण्यं स्वस्ति तेऽस्तु व्रजाम्यहम् । यः शृणोति शुचिर्भूत्वा पुराणं ह्येतदुत्तमम् २२ माघे मासि प्रयागे तु स स्नानफलमाप्नुयात् । यो भक्त्या श्रावयेद्भक्तान्नित्यं नरहरेरिदम् २३ सर्वतीर्थफलं प्राप्य विष्णुलोके महीयते । श्रुत्वैवं स्नातकैः सार्धं भारद्वाजो महामतिः २४ सूतमभ्यर्च्य तत्रैव स्थितवान् मुनयो गताः । सर्वपापहरं पुण्यं पुराणं नृसिंहात्मकम् २५ पठतां शृण्वतां नृणां नरसिंहः प्रसीदति । प्रसन्ने देवदेवेशे सर्वपापक्षयो भवेत् २६ प्रक्षीणपापबन्धास्ते मुक्तिं यान्ति नराइति २७ ॥ ॥ इतिश्रीनरसिंहपुराणे मानसतीर्थव्रतं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

# अष्टषष्टितमोऽध्यायः ।

——:०:——

॥ सूत उवाच ॥

इत्येतत्सर्वमाख्यातं पुराणं नारसिंहकम् । सर्वपापहरं पुण्यं सर्वदुःखनिवारणम् १ समस्तपुण्यफलदं सर्वयज्ञफलप्रदम् । ये पठन्त्यपि शृण्वन्ति श्लोकं श्लोकार्द्धमेव वा २ न तेषां पापबन्धस्तु कदाचिदपि जायते । विष्णवर्पितमिदं पुण्यं पुराणं सर्वकामदम् ३ भक्त्या च वदतामेतत् शृण्वतां च फलं शृणु । शतजन्मार्जितैः पापैः सद्य एव विमोचिताः ४ सहस्रकुलसंयुक्ताः प्रयान्ति परमं पदम् । किं तीर्थैर्गोप्रदानैर्वा तपोभिर्वा किमध्वरैः ५ अहन्यहनि गोविन्दं तत्परत्वेन शृण्वताम् । ' यः पठेत्प्रातरुत्थाय यदस्य श्लोकविंशतिम् ६ ज्योतिष्टोमफलं प्राप्य विष्णुलोके महीयते' । एतत्पवित्रं पूज्यं च न वाच्यमकृतात्मनाम् ७ द्विजानां विष्णुभक्तानां श्राव्यमेतन्न संशयः । एतत्पुराणश्रवणमिहामुत्रसुखप्रदम् ८ वदतां शृण्वतां सद्यः सर्वपापप्रणाशनम् । बहुनात्र किमुक्तेन भूयोभूयो मुनीश्वराः ९ श्रद्धयाऽश्रद्धया वापि श्रोतव्यमिदमुत्तमम् । भारद्वाजमुखाः सर्वे कृतकृत्या द्विजोत्तमाः १० सूतं हृष्टाः प्रपूज्याथ सर्वे स्वं स्वाश्रमं ययुः ११ इति श्रीनरसिंहपुराणे सूतभारद्वाजादिसंवादे सर्वदुःखोपहरं श्रीनरसिंहपुराणं समाप्तम् ॥ ॥ शुभंभवतु ॥

---

१ अयमध्यायो ' ग ' पुस्तके न विद्यन्ते । २ 'एतद्वः सर्वमाख्यातं' इति ' ख ' पुस्तके पाठः । ३ एतत्पद्यं ' ख ' पुस्तके न विद्यते ।

संपूर्णम्

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

# संस्कृत पुस्तकानि।

| | रु० | आ० |
|---|---|---|
| नृसिंहपुराणम् टिप्पणीयुतम्—श्रीव्यासः .... | २ | ८ |
| रतिमन्मथ नाटकं—छायासमेतम्-पंडित जगन्नाथ विरचितं .... .... .... .... | ० | १० |
| प्रतापरुद्र कल्याणं नाटकम्-सटिप्पणम्-श्रीविद्यानाथ कविविरचितं .... .... .... | ० | ८ |
| धर्मविजयं नाटकं छायासमेतम्-श्रीभूदेव शुक्लविरचितम् .... .... .... | ० | १० |
| वैद्यमनउत्सवः टिप्पणीसमेतः श्रीमन्मिश्रवंशीधरप्रणीतः .... .... | ० | ५ |
| नीतिवाक्यामृतं सटिप्पणम् श्रीसोमदेवसूरेः .... | १ | ० |
| प्रशस्तिकाशिका—बालकृष्णस्य .... .... | ० | ६ |
| प्रश्नोत्तररत्नमाला सटीका—शंकरानंदस्य .... | ० | ४ |
| सिद्धांतचंद्रिका सटीका—श्रीगंगाधर सरस्वतीकृता.... | ० | ६ |
| अध्यात्मप्रदीपिका पाठांतरैः समेता—अष्टावक्रस्य .... | ० | ६ |
| अंबाष्टकं सटीकम्—श्रीशंकराचार्यस्य .... .... | ० | २ |
| षट्पदमंजरी टीकासमेता—शंकराचार्यस्य .... | ० | ४ |
| सज्जनवल्लभः टिप्पणीसहितःश्रीभानुपंडितविरचितः.... | ० | ६ |
| अलंकारकौमुदी—श्रीवल्लभभट्टविरचिता .... | ० | २ |
| अलंकारशास्त्रं सटीकम—श्रीवाग्भट्टप्रणीतं .... | ० | ८ |
| आर्याशतकं टिप्पणीयुतम्—श्रीमूककवेः .... | ० | २ |
| आर्यासटीकाः श्रीमुद्गलाचार्यरचिताः.... .... | ० | १० |
| उदारराघवःसटिप्पणः—श्रीकविमल्लाचार्यस्य .... | १ | ८ |
| उत्तररामचरित्रचंपूः टिप्पणी समेता—श्रीव्यंकटाध्वरि विरचिता .... .... .... | १ | ० |
| कलिविडंबनं टिप्पणीयुतम्—श्रीनीलकंठस्य .... | ० | २ |
| कविचित्तप्रमोदकः सटीकः—श्रीकविगोविंद विरचितः | ० | ४ |
| कविरहस्यं टिप्पण्या समेतम्—हलायुधस्य .... | ० | ८ |
| कटाक्षशतकं टिप्पणीयुतम्—श्रीमूककवेः .... | ० | ४ |
| कामाक्षीस्तुतिशतकं टिप्पणीयुतम्—श्रीमूककवेः.... | ० | ४ |

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

| | रु० | आ० |
|---|---|---|
| कुवलयाश्व विलासः टिप्पणीसमेतः— श्रीत्रिविक्रमकविरचितः .... .... | १ | ० |
| कृष्णामृततरंगीका सटिका—श्रीवेङ्कटेशस्य .... | ० | ६ |
| कृष्णभक्तिचंद्रिका निबंधः—श्रीअनंतदेवरचिता .... | ० | ९ |
| गीतगौरीपति सटीकम्—श्रीभानुदत्तस्य .... | ० | १२ |
| चौरपंचाशिका सटिप्पणः—बिल्हण कविकृता .... | ० | ६ |
| नाटवाटप्रहसनम्—श्रीयदुनन्दरचितं .... | ० | ६ |
| निर्वाणाष्टकं सटिप्पणम्—शुकविरचितं.... .... | ० | २ |
| धातुकारिकावलीः टिप्पणीसमेतं—श्रीवरदराजकृतं.... | ० | २ |
| प्रसंगाभरणं टिप्पणीसमेतं— श्रीमत्कविकुलतिलकोक्ति .... .... | ० | ९ |
| भावशतकं टिप्पणीसहितम्—श्रीनागनाथस्य .... | ० | ४ |
| भागवतचंपूःटिप्पणीसमेता—श्रीअभिनवकालिदासस्य | १ | ८ |
| भागीरथीचंपूःटिप्पणीसमेता—श्रीअच्युतशर्मणः .... | १ | ४ |
| भामिनीविलासः सटीकः—पंडितजगन्नाथकृतः .... | १ | ० |
| भार्गवचंपूः टिप्पणीसमेतः—श्रीरामकृष्णसूरेः .... | ० | ८ |
| रसिकजीवनम्—श्रीपंडितगंगाधरभट्ट संकलितं .... | २ | ० |
| रसतरंगणी टिप्पणीसमेता—श्रीभानुदत्तस्य .... | ० | १० |
| रसमंजरी व्यंगार्थकौमुद्युपेता—श्रीभानुदत्तस्य .... | १ | ४ |
| रघुनाथविजयचंपूः टिप्पणीसमेता .... .... | ० | ८ |
| राघवपांडवीयं सटीकम्—पंडित श्रीकविराज विरचितं | १ | ४ |
| राधाविनोदः सटीकः—श्रीरामचंद्रकविविरचितः .... | ० | २ |
| रासार्यागुच्छः श्रीगोपालविरचितः टिप्पणीसमेता.... | ० | २ |
| रुक्मिणीपाणीग्रहणं सटिप्पणं श्रीगोविंदान्तर्बाणेः .... | २ | ० |
| लक्ष्मीविलासःसटिप्पणः—श्रीकविमहेश्वरविरचितः | ० | ३ |
| श्रीमद्रामायणं टिप्पणीसमेतम्—श्रीअग्निवेश्यकृषिप्रणीतं .... .... .... | ० | ३ |
| शिवमहिम्नस्तोत्रं—श्रीशिवयोगिकृतव्याख्यासहितम् | ० | ४ |
| सुंदरलहरी टिप्पणीसहीता—श्रीशंकराचार्यकृता .... | ० | ४ |

---

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

